# अभिनवा पाठावलिः

तृतीया

‘ मास्तर ऑफ् आर्त ’ इति ‘ सेकंडरी ट्रेनिंग कॉलेज डिप्लोमा ’ इति च
उपपदद्वयसमलङ्कृतेन मुंबापुरस्थ–‘ सेकंडरी-ट्रेनिंग-कॉलेजा ’भिधे
राजकीयविद्यापीठे प्रधानसंस्कृताध्यापकपदधारिणा
**बोकीलकुलोत्पन्नेन पांडुरंगसूनुना विनायकशर्मणा**
तथैव च
‘ बॅचेलर ऑफ आर्ट्स् ( ऑनर्स )’ इति, ‘ बॅचेलर ऑफ टीचिंग ’ इति च
उपपदद्वयधारिणा सप्ततारनगरस्थ-प्रधानाङ्ग-राजकीयपाठशालायां
नियुक्तेन संस्कृताध्यापकेन
**रड्डीकुलोत्पन्नेन रङ्गाचार्यसूनुना लक्ष्मीकान्तशर्मणा**
विरचिता

मॅक्मिलन् ऍण्ड कंपनी, लिमिटेड,
इति प्रथितया श्रेण्या प्रकाशिता
१९३७

# अभिनवा पाठावलिः

तृतीया



# अभिनवा पाठावलिः

तृतीया

'मास्तर ऑफ आर्ट' इति, 'सेकंडरी ट्रेनिंग कॉलेज डिप्लोमा' इति च
उपपदद्वयसमलङ्कृतेन मुम्बापुरस्थ—'सेकंडरी-ट्रेनिंग-कॉलेजा' भिधे
राजकीयविद्यापीठे प्रधानसंस्कृताध्यापकपदधारिणा
**बोकील**कुलोत्पन्नेन **पाण्डुरङ्ग**सूनुना **विनायक**शर्मणा
तथैव च
'बॅचेलर ऑफ आर्ट्स् (ऑनर्स)' इति, 'बचेलर ऑफ टीचिंग' इति च
उपपदद्वयधारिणा सप्ततारनगरस्थ-प्रधानाङ्ल-राजकीयपाठशालायां
नियुक्तेन संस्कृताध्यापकेन
**रङ्गी**कुलोत्पन्नेन **रङ्गाचार्य**सूनुना **लक्ष्मीकान्त**शर्मणा
विरचिता

**मॅक्मिलन् ॲण्ड कंपनी, लिमिटेड**
इति ग्रन्थप्रकाशनश्रेण्या प्रकाशिता

प्रकाशकैः सर्वेऽधिकाराः स्वायत्तीकृताः ] १९३७ [ मूल्यं एकरूप्यकः

# PREFACE

This is the third book of the "New Sanskrit Readers" Series, intended for use in standard VI in Secondary Schools. It contains a variety of lessons taken from classical works in Sanskrit, modified a little here and there, and graded to suit the stage of instruction. As usual, exercises have been given at the end of each lesson, which will show the teacher how new forms and words are to be introduced, how a critical study of the particular passage may be made, and how a certain portion of written work from the pupil must be insisted on. At this stage there should be no necessity for spoon-feeding by the teacher. Oral work may be reduced, and more translation may be given to explain the abstract ideas and difficult constructions so often to be met with in classical Sanskrit.

Translation should now be taught as an *art*, the aim being to lead the pupil to study carefully the structure of both languages. Re-translation is a very useful device in this respect; it helps the pupil to compare his own rendering with the original and encourages him, in due course, to cultivate style.

With this reader the class should also try free composition, the subjects being limited to simple descriptive and narrative topics for which a classical vocabulary is available. The teacher may give guidance in the careful arrangement of material before making the pupil write a short paragraph on each important point. The teacher must remember, in these exercises, that the aim is to improve style. The teacher may also encourage the pupil occasionally to imitate the classical style in poetry as well as in prose.

As usual, the grammar lessons should be given inductively. The pupils must know a minimum of Sanskrit grammar by

heart, and be able to use various forms of nouns, verbs, adjectives and numerals without hesitation or doubt. Grammar lessons should end always with their application to language, giving the pupil sufficient drill in the recognition and use of the different forms and idioms.

Our sincere thanks are due to the authors of the various classical works from which the lessons have been taken and to Pandit Rangacharya Raddi and Mr. B. M. Khuperkar Shastri for having read the manuscript and made useful suggestions.

Bombay, 28th July, 1930.

V. P. Bokil,
L. R. Raddi.

*New Edition.*

We thank Mr. M. K. Gokarnakar Shastri for having gone through the proofsheets of this edition.

*Authors.*

Bombay, 15th October, 1937.

# अनुक्रमणिका

# प्रथमः पाठः ।

## मुकुन्दवर्णनम् ।



वन्दे मुकुन्दमरविन्ददलायताक्षं
कुन्देन्दुशङ्खदशनं शिशुगोपवेशम् ।
इन्द्रादिदेवगणवन्दितपादपीठं
वृन्दावनालयमहं वसुदेवसूनुम् ॥ १ ॥
जयतु जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ २ ॥
मुकुन्द मूर्ध्ना प्रणिपत्य याचे
भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे
भवे भवे मेऽस्तु भवत्प्रसादात् ॥ ३ ॥
श्रीमुकुन्दपदाम्भोजमधुनः परमाद्भुतम् ।
यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥ ४ ॥
दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि ॥ ५ ॥

सरसिजनयने सशङ्खचक्रे
मुरभिदि मा विरमेह चित्त रन्तुम् ।
सुखकरमपरं न जातु जाने
हरिचरणस्मरणामृतेन तुल्यम् ॥ ६ ॥

मा भैर्मन्द मनो विचिन्त्य बहुधा यामीश्चिरं यातनाः
नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ ७ ॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम् ।
सरसिजदृशि देवे तावकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ ८ ॥

आनन्द गोविन्द मुकुन्द राम
नारायणानन्त निरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चिद्
अहो जनानां व्यसनानि मोक्षे ॥ ९ ॥

क्षीरसागरतरङ्गशीकरा-
सारतारकितचारुमूर्तये ।
भोगिभोगशयनीयशायिने
माधवाय मधुविद्विषे नमः ॥ १० ॥

[ मुकुन्दमालायाम् ]

---

**प्रश्नाः**—कस्मिन् वंशे श्रीकृष्णोऽवतीर्णः ? किं याचते भक्तः श्रीकृष्णम् ? के नाम पापरिपवः ? किमवश्यं तारयिष्यति नरान् ?

**परीक्षणम्**—को भावः समुत्पद्यते युष्माकं मनसि काव्यस्यास्य पठनेन। के श्लोकाः युष्मभ्यमधिकतरं रोचन्ते। कस्मात् कारणात्। प्रथमे श्लोके को वर्णो बहुशः प्रयुक्तो वर्तते। कश्च तस्य परिणामः। द्वितीये श्लोके तृतीयपङ्क्तौ को विशेषो दृश्यते। तथैव तृतीये श्लोके चतुर्थपङ्क्त्याम्। षष्ठे श्लोके केनोपमितं हरिचरणस्मरणम्। दशमे श्लोके 'तारकित'–पदस्य रहस्यं प्रदर्श्यताम्।

**समासाः**—वृष्णिवंशप्रदीपः । अवधीरितशारदारविन्दौ । सरसिजनयने । मुरभिदि । भोगिभोगशयनीयशायिने । (एतेषां विग्रहान् कृत्वा नामानि कथयत।)

**काव्यवृत्तम्**—

१. वसन्ततिलका—(उक्ता वसन्ततिलका तभजा जगौ गः।)

| त | भ | ज | ज | ग ग |
|---|---|---|---|---|
| वन्दे मु | कुन्दम | रविन्द | दलाय | ताक्षम् |

२. मालिनी—(ननमययुतेयं मालिनी भोगिलोकैः।)

| न | न | म | य | य | |
|---|---|---|---|---|---|
| जयतु | जयतु | देवो दे | वकीन | न्दनोऽय | म् |

३. उपेन्द्रवज्रा—(उपेन्द्रवज्रा जतजास्ततो गौ।)

| ज | त | ज | ग ग |
|---|---|---|---|
| मुकुन्द | मूर्ध्ना प्र | णिपत्य | याचे। |

४. अनुष्टुभ्—लक्षणादिकं चतुर्थे पाठे द्रष्टव्यम्।

५. मालभारिणी—(विषमे ससजा गुरू समे चेत्सभरा येन तु मालभारिणीयम्।)

| स | स | ज | ग ग |
|---|---|---|---|
| दिवि वा | भुवि वा | ममास्तु | वासो |

| स | भ | र | य |
|---|---|---|---|
| नरके | वा नर | कान्तक | प्रकामम्। |

६. पुष्पिताग्रा—( अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा । )

| न | न | र | य |
|---|---|---|---|
| सरसि | जनय | ने सश | ङ्कचक्रे |

| न | ज | ज | र | ग |
|---|---|---|---|---|
| मुरभि | दि मा वि | रमेह | चित्त र | न्तुम् । |

७. शार्दूलविक्रीडितम्—( सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूल-विक्रीडितम् । )

| म | स | ज | स | त | त | ग |
|---|---|---|---|---|---|---|
| मा भैर्म | न्द मनो | विचिन्त्य | बहुधा | यामीश्चि | रं यात | नाः |

८. मालिनी—( लक्षणं द्वितीयश्लोके कथितम् । )

९. इन्द्रवज्रा—( स्यादिन्द्रवज्रा यदि तौ जगौ गः । )

| त | त | ज | ग ग |
|---|---|---|---|
| आनन्द | गोविन्द | मुकुन्द | राम |

( यद्यपि अस्यां पङ्क्तौ अन्त्याक्षरं ह्रस्वं तथापि वृत्तस्य कृते तद् दीर्घमिति ज्ञेयम् । )

१०. रथोद्धता—( रान्नराविह रथोद्धता लगौ । )

| र | न | र | ल | ग |
|---|---|---|---|---|
| क्षीरसा | गरत | रङ्गशी | क | रा |

---

# द्वितीयः पाठः।

## बकचापलम्।



अस्ति भागीरथीतीरे श्वेताङ्गो नाम बकः। स कदाचिन्मानस-निवासिनां हंसानां गुणान् रसिकैरुपवर्ण्यमानानाकर्ण्य सञ्जातेर्ष्यश्चिन्तयामास। अहो, को हि नामास्मदपेक्षया हंसेषु विशेषो येन मन्दा अमी तानेव प्रशंसन्ति। यथा वयमेवं तेऽपि श्वेतकायास्तोयाधारसञ्चारिणश्च। भवतु, अतःपरं हंसेनैव मया भवितव्यमिति। एवं विचिन्त्य सोऽयं मूढधीः प्रफुल्लकह्लारभासुरेषु सरस्सु विहर्तुमारेभे। हिमांशुखण्डधवलानि च मृणालान्यास्वादयन् राजहंसतामेवात्मनः प्रकाशयामास। अत्यजच्च बकजात्युचितं मत्स्यव्यापादनम्।

अथ कदाचित्स्नानार्थमुपस्थितेन केनापि मुग्धमतिना दारकेण कौतुकाद्गृहीतोऽयमानीतश्चात्मनः सदनम्। गृहवर्तिनो वृद्धास्तु तमवलोक्य भ्रान्तोऽसि वत्स, येन त्वयाऽयं धूर्तशिरोमणिर्बको हंस इति मत्वा गृहीत इत्यब्रुवन्। श्वेताङ्गस्तु तदाकर्ण्य रोषमिवाभिनयन् प्राह। धिङ् मूढानपरीक्ष्य-वादिनो ये हंसकुललब्धजन्मानमपि मां बक इति प्रजल्पन्तीति। तदाकर्ण्य कोऽपि चतुरमतिः सविनयमब्रवीत्। युज्यते महाभाग, कुतोऽन्यथा तवैतच्छुक्लत्वम् ? भवतु। अपनीयतां कोपः। आस्वाद्यतां चैतत्क्षीरमिति। अभिधाय चैवं सलिलमिश्रमस्मै पय उपजहार। सोऽपि मन्दात्मा निःशेषमप्येतत्प्राशितवान्। तदवलोक्य च तेनाभिहितः। धूर्त बकहतक,

न जातु कर्मसादृश्याज्जातिर्विपरिवर्तते ।
रथवाहनमात्रेण किमश्वायेत गर्दभः ॥ १ ॥

तद्गच्छ ज्ञातोऽसीति । सोऽपि लज्जितो यथागतं प्रतिजगाम । अत एवोच्यते प्रज्ञैः—

हंसः शुक्लो बकः शुक्लः को भेदो बकहंसयोः ।
नीरक्षीरविभागे तु हंसो हंसो बको बकः ॥ २ ॥ इति ।

[ संस्कृतचन्द्रिकायाम् ]

---

**प्रश्नाः**—कीदृशः स्वभावो बकस्य हंसस्य च ? हंसस्य कः स्वभावविशेषः ? कुत्र निवसन्ति हंसाः ? कथं परीक्षितो बको वृद्धैः ? किं कर्तुं बका अक्षमा हंसाः समर्था वा ?

**शब्दाः**—' हंस ' वाचकान् सर्वान् शब्दान् कथयत ।

**स्पष्टीकरणम्**—गर्दभः अश्वायते—अश्व इव भवति करोति आचरति वा । बकः हंसायते—हंस इव आचरति ।

**समासाः**—सञ्जातेर्ष्यः । मूढधीः । प्रफुल्लकह्लारभासुरेषु । बकजात्युचितम् । हंसकुललब्धजन्मानम् । यथागतम् । ( एतेषां विग्रहान् कृत्वा नामानि कथयत । )

---

# तृतीयः पाठः ।

## आत्मवञ्चितस्य कच्छपस्य ।



कस्मिंश्चित् सरसि गूढग्रीवो नाम कच्छपो वसति स्म । तस्य द्वौ हंसौ जीवितनिर्विशेषौ सुहृदावास्ताम् । तौ प्रत्यहं सरस्तीरमागत्य तेन सह पुण्याभिः कथाभिः सुखेन कालं नीत्वास्तमनकाले स्वनीडसंश्रय-

मकुरुताम् । गूढग्रीवोऽपि तेन सत्समागमेन शास्त्रनिपुणो बहुश्रुतश्च सञ्जातः । परं जातिस्वभावान्नित्यमधीरप्रकृतिरासीत् । अथ गच्छता कालेन कश्चन धीवरः सरस्तीरमागत्यावदत् । अहो महानेष जलाशयः । बहुभिर्जलचरैरत्र भाव्यम् । तदेनं श्व आलोडयिष्यामीति । एतद्वचन-माकर्ण्य भृशं चिन्ताकुलः सन् गूढग्रीवो वयस्यौ प्रत्यब्रवीत् । भोः प्रियसुहृदौ न मेऽधुनाशा जीवितं प्रति । सर्वथा मन्दभाग्योऽहं श्वो धीवरजाले पतिष्यामि । तन्न भवद्भ्यां मद्धेतोर्विषादः कार्यः । केवलं स्मर्तव्योऽहं प्रियजनकथासु ।

तत्तस्य वचः श्रुत्वा तयोरेकतरो हंसः प्राह । सखे, न त्वं धैर्यं त्यक्तुमर्हसि । विचिन्त्यतां कोऽपि रक्षणोपायो येनैतामपि महापदं तरसि । कच्छपः प्रत्याह । सत्यमुदितं वयस्येन । परमस्मिन् सङ्कटे न मे बुद्धिः प्रभवति । किं करोमि ? सर्वथा विवशोऽस्मि सञ्जातः । तद्यदि भवद्भ्यां कश्चिदुपायो दृष्टो भवेत्तर्हि रक्ष्यन्तामेते ममाल्पभाग्यस्य प्राणाः ।

ततोऽन्यतरेण हंसेनोक्तम् । अस्ति तावदेक उपायः । इतो नातिदूरे प्रभूतजलं नीलोदं नाम विजनं सरो विद्यते । तत्र त्वां नयावः । इदमत्र लघुकाष्ठं वर्तते । एतत्त्वं मध्यदेशे दन्तैः सुदृढमवलम्बस्व । आवां चैनत् कोटिभागयोर्गृहीत्वा त्वत्सहितमुद्धृत्य नभोमार्गेण तत्सरो नयावः । परं त्वया मौनव्रतेन भाव्यम् । नो चेत् काष्ठात् पतितः पञ्चत्वं गमिष्यसि । गूढग्रीवोऽवदत् । एवं करोमि । न पुनर्मार्गे किमपि वचनप्रयोजनं भवेत् । अनुगृहीतोऽस्मि भवद्भ्याम् ।

अथ ते तथोच्चैरम्बरमार्गेण गच्छन्तः कस्यापि महापुरस्योपरि प्राप्ताः । तत्र तं कूर्मं हंसाभ्यां तथा नीयमानमवलोक्य पौराः सविस्मयमवदन् । अहो चक्राकारं किमपि पक्षिभ्यां नीयते । पश्यत

पश्यतेति । एवं तेषां मिथः संवदतां महान् कोलाहलः समुत्पन्नः । तं श्रुत्वोपजातकुतूहलोऽधीरप्रकृतिरसौ कूर्मो विस्मृतमित्रवचनः सहसैवोच्चैरवदत् । भोः किमेष कोलाहलः—इत्यर्धोक्ते काष्ठाद् भ्रष्टो गूढग्रीवो वेगेन भूमौ निपतितः क्षणाच्च पञ्चत्वं गतः ।

[ हितोपदेशे ]

---

**प्रश्नाः**—कीदृशः स्वभावः कच्छपस्य ? किं व्यसनमापतितं तस्य ? क उपायश्चिन्तितो हंसाभ्यां तस्य निराकरणे ? किमर्थं कोलाहलः कृतः पौरैः ? केन कारणेन काष्ठाद् भ्रष्टः स कूर्मः ?

**विशदीकरणम्**ः—( १ ) केवलं स्मर्तव्योऽहं प्रियजनकथासु । ( २ ) परं त्वया मौनव्रतेन भाव्यम् । ( ३ ) हंसाभ्यां तथा नीयमानं कूर्ममवलोक्य पौराः सविस्मयमवदन् ।

**समासाः**—अधीरप्रकृतिः । विस्मृतमित्रवचनः । मन्दभाग्यः । जीवित-निर्विशेषौ । महापदम् । नीलोदम् । ( एतेषां विग्रहान् कृत्वा नामानि कथयत । )

**स्वभाववर्णनम्**—अधीरप्रकृतेः पुरुषस्य व्यसनशतानि कथमापतन्ति तद्विस्तरेण वर्णयत ।

---

# चतुर्थः पाठः ।

## शबर्युपाख्यानम् ।



कृतातिथ्यं रघुश्रेष्ठमुपविष्टं सहानुजम् ।
शबरी भक्तिसम्पन्ना प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥
अत्राश्रमे रघुश्रेष्ठ गुरवो मे महर्षयः ।
स्थिताः शुश्रूषणं तेषां कुर्वती समुपस्थिता ॥ २ ॥

बहुवर्षसहस्राणि गतास्ते ब्रह्मणः पदम् ।
गमिष्यन्तोऽब्रुवन् मां त्वं वसात्रैव समाहिता ॥ ३ ॥
रामो दाशरथिर्जातः परमात्मा सनातनः ।
राक्षसानां वधार्थाय ऋषीणां रक्षणाय च ॥ ४ ॥
आगमिष्यति चैकाग्रध्याननिष्ठा स्थिरा भव ।
इदानीं चित्रकूटाद्रावाश्रमे वसति प्रभुः ॥ ५ ॥
यावदागमनं तस्य तावद्रक्ष कलेवरम् ।
दृष्ट्वैव राघवं देहं दग्ध्वा यास्यसि तत्पदम् ॥ ६ ॥
तथैवाकरवं राम त्वद्ध्यानैकपरायणा ।
प्रतीक्ष्यागमनं तेऽद्य सफलं गुरुभाषितम् ॥ ७ ॥
कथं रामाद्य मे दृष्टस्त्वं मनोवागगोचरः ।
स्तोतुं न जाने देवेश किं करोमि प्रसीद मे ॥ ८ ॥
श्रीराम उवाच——यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः ।
नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः कदा ॥ ९ ॥
तस्माद्भामिनि वक्ष्येऽहमिदानीं भक्तिसाधनम् ।
सतां सङ्गतिरेवात्र साधनं प्रथमं स्मृतम् ॥ १० ॥
यस्मान्मद्भक्तियुक्ता त्वं ततोऽहं त्वामुपस्थितः ।
इतो मद्दर्शनान्मुक्तिस्तव नास्त्यत्र संशयः ॥ ११ ॥
श्रुत्वा सा रामवचनं प्रविवेश हुताशनम् ।
तत्क्षणं तत्प्रसादाच्च प्राप मोक्षं सुदुर्लभम् ॥ १२ ॥

[अध्यात्मरामायणे]

---

**प्रश्नाः**——कस्यातिथ्यं कृतं शबर्या ? किमवदन् गुरवः शबरीम् ? ईश्वरप्राप्तेः किमनुत्तमं साधनम् ? केन गुणेन शबर्या रामदर्शनं जातम् ?

**परीक्षणम्**——को रसः प्रधानोऽस्मिन् काव्ये । के श्लोका रम्यतमाः । कस्मात्कारणात् । षष्ठे दशमे च श्लोके किमक्षरं बहुशः प्रयुक्तमस्ति । किं वा तस्य कार्यम् । प्रथमे सप्तमे च श्लोके कानि विशेषणपदानि प्रकृतार्थं पोषयन्ति । तेषां रहस्यं विशदीकुरुत ।

**समासाः**—सहानुजम् । त्वद्ध्यानैकपरायणा । मनोवागगोचरः । हुताशनम् । सुदुर्लभम् । ( एतेषां विग्रहान् कृत्वा नामानि कथयत । )

**काव्यवृत्तम्**—अनुष्टुभ् वृत्तम्——( श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ )

लगुगु लगुल
कृतातिथ्यं रघुश्रेष्ठमुपविष्टं सहानुजम् ।

लगुगु लगुल
शबरी भक्तिसम्पन्ना प्राञ्जलिर्वाक्यमब्रवीत् ॥

---

# पञ्चमः पाठः ।

## टिट्टिभचातुर्यम् ।



अथैकस्मिन् समुद्रप्रदेशे टिट्टिभदम्पती वसतः स्म । तत्र पुलिन-भागे स्वकृतनीडे तयोरण्डानि स्थापितानि । तदा सागरवेलामागच्छन्तीं वीक्ष्य सा टिट्टिभी स्वनाथमुवाच । भो आर्यपुत्र, विषमोऽयं पुलिन-प्रदेशः । तद्विचिन्त्यतां किमपि निरुपद्रवं स्थलं यत्र सुखेन प्रियापत्यैः सह चिरं वसाव इति । तदाकर्ण्य स टिट्टिभ आह । भद्रे, रम्योऽयं

समुद्रप्रदेशः । न किमप्यत्र भीतिप्रदम् । आवयोरण्डान्यपहर्तुं सागरो न शक्ष्यति । का मात्रा नाम समुद्रस्य मम पुरतः । तद्विश्रब्धा भवेति । सा टिट्टिभी प्रत्युवाच । नैतद्वचनं युक्तं कान्त । क्व विशालः सागरः क्व च भवान् स्वल्पबलः खगः । बलीयसा न कदापि वैरमुचितमिति । टिट्टिभोऽब्रवीत् । कियत् पुनः सागरस्य बलं तदेव परीक्षितुमिच्छामि । न किमप्यत्र भेतव्यम् । पश्य तावन्मे पराक्रममिति । तयोर्दम्पत्योरिदं वचः श्रुत्वा समुद्रश्चिन्तयामास । अहो मदान्धता पक्षिकीटकस्य । तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यम् । किं ममैषोऽण्डापहारं करिष्यतीति ।

पूर्णिमायां महती समुद्रवेलावहत् । तया च टिट्टिभाण्डान्यपहृतानि । तदा विलपन्ती सा टिट्टिभी भर्तारं भृशं निनिन्द । तदाकर्ण्य टिट्टिभोऽवदत् । भद्रे, किं मां मूर्खं सम्भावयसि । तत् पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं शोषयामि । येषामुत्साहशक्तिर्विद्यते स्वल्पा अपि ते गुरून् विक्रमन्ते । तदनया लोहसन्निभया मे चञ्च्वा सकलमेतज्जलं शोषयामि इति । तस्य वचनं श्रुत्वा सा टिट्टिभी प्राह । भोः कान्त, कस्ते सागरेण सह विग्रहः । यत्र जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति स सिन्धुः कथं शोष्यते ? यदि त्वयावश्यं वैरानुष्ठानं कार्यं तर्हि स्वबन्धूनन्यानपि विहगानाहूय सुहृज्जनसहित एवं समाचर । यतोऽसाराणामपि बहूनां समवायो दुर्जयो भवतीति । ततः स बकसारसमयूरादीन् समाहूय प्रोवाच । भो वयस्याः, पराभूतोऽहं समुद्रेण । अपहृतानि तेन ममाण्डानि । तर्हि चिन्त्यतामस्य शोषणोपाय इति । ते खगाः सम्मन्त्र्य प्रोचुः । अशक्ता वयमस्मिन् कर्मणि । तदस्माकं स्वामी वैनतेयोऽस्ति । तत्सकाशं गत्वा निवेदयाम इदं परिभवस्थानम् ।

तथा निश्चित्य ते सर्वे गरुडस्य सकाशं गत्वा तस्मै टिट्टिभवृत्तान्तं कथयामासुः । तं समाकर्ण्य गरुडः कोपाविष्टः सन् समुद्रशोषणनिश्चयं चकार । भगवन्तं महाविष्णुं प्रणम्य स उवाच । भगवन्, भवदाश्रयोन्मत्तेन सागरेण मम भृत्यस्याण्डान्यपहृतानि । तद्रक्षयतामस्माकं खगकुलम् । ततः समुद्रो भगवता निर्भर्त्स्याग्नेयं च शरं सन्धायाभिहितः । भो दुरात्मन्, दीयन्तां टिट्टिभाण्डानि । नो चेत् स्थलतां त्वां नेष्यामीति । ततो भीतिग्रस्तेन समुद्रेण तानि टिट्टिभाण्डानि प्रदत्तानि ।

[ पञ्चतन्त्रे ]

---

**प्रश्नाः**--कुत्र निवसन्ति टिट्टिभाः ? का तेषां तत्र भीतिः ? एकस्मिन् मासे समुद्रवेला कतिवारमावहति ? को निश्चयष्टिट्टिभस्य ? केषां साहाय्यं तेन याचितम् ? किमर्थं ते विहगा गरुडं प्रति गताः ? गरुडेन किं कृतम् ? किं तात्पर्यमस्याः कथायाः ?

**शब्दप्रयोगाः**—( १ ) क्व विशालः सागरः क्व भवान् । ( द्वौ क्वौ महदन्तरं सूचयतः । ) ( 'क्व, क्व' इत्यव्ययद्वयम् अन्येषु वाक्येषु प्रयोजयत । ) ( २ ) भेतव्यम्, द्रष्टव्यम्, विक्रमन्ते, सम्मन्त्र्य ( वाक्येषु प्रयोजयत । ) ( ३ ) 'वैनतेय' इत्यर्थेऽन्यान् शब्दान् कथयत ।

**समासाः**—स्वकृतनीडे । निरुपद्रवम् । दम्पती । सुहृज्जनसहितः । ( एतेषां विग्रहान् कृत्वा नामानि कथयत । )

**सुभाषितानि**:--( १ ) बलीयसा न कदापि वैरमुचितम् । ( २ ) येषामुत्साहशक्तिर्विद्यते स्वल्पा अपि ते गुरून् विक्रमन्ते । ( ३ ) असाराणामपि बहूनां समवायो दुर्जयो भवति । ( एतादृशान्यन्यानि सुभाषितानि कथयत । )

---

# षष्ठः पाठः ।

## सन्मित्रम् ।



आसीद्गोदावरीतीरे विशालः शाल्मलीतरुः । तत्र नानादिग्देशादागत्य रात्रौ पक्षिणो निवसन्ति स्म । अथ कदाचिदवसन्नायां रात्र्यामस्ताचलचूडावलम्बिनि भगवति कुमुदिनीनायके चन्द्रमसि तत्रैव कश्चिद् व्याधस्तण्डुलान् विकीर्य जालं वितस्तार प्रच्छन्नो भूत्वा स्थितश्च । तस्मिन्नेव काले चित्रग्रीवनामा कपोतराजः सपरिवारो वियति विसर्पंस्तांस्तण्डुलकणानवलोकयामास । ततः कपोतराजस्तण्डुलकणलुब्धान् कपोतान् प्रत्याह । कुतोऽत्र निर्जने वने तण्डुलकणानां सम्भवः । एतन्निरूप्यतां तावत् । भद्रमिदं न पश्यामि । सर्वथाविचारितं कर्म न कर्तव्यम् । इत्येतद्वचनं श्रुत्वा कश्चित् कपोतः सदर्पमाह । आः किमेवमुच्यते ।

वृद्धानां वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैव विचारेण भोजनेऽप्यप्रवर्तनम् ॥ १ ॥

एतदाकर्ण्य सर्वे कपोतास्तत्रोपविष्टाः । यतो बहुश्रुता अपि लोभमोहिताः क्लिश्यन्ते । उक्तं हि—

असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति ॥ २ ॥

तत्र ते सर्वे जालेन बद्धा बभूवुः । ततो यस्य वचनात्तत्रावलम्बितास्तं सर्वे तिरस्कुर्वन्ति स्म । तच्छ्रुत्वा चित्रग्रीव उवाच । नायमस्य

दोषः । यत आपतन्तीनामापदां हितोऽपि हेतुतामायाति । विपत्काले विस्मय एव कापुरुषलक्षणम् । तदत्र धैर्यमवलम्ब्य प्रतीकारश्चिन्त्यताम् । यतः—

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ३ ॥

अन्यच्च—

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ४ ॥



इदानीं क्रियतामेवम् । सर्वैरेकचित्तीभूय जालमादायोड्डीयताम् । इति निश्चित्य पक्षिणः सर्वे सहसैव जालमादायोत्पतिताः । अनन्तरं स व्याधः सुदूराज्जालापहारकांस्तानवलोक्य पश्चाद्धावन्नचिन्तयत् ।

संहतास्तु हरन्तीमे जालं मम विहङ्गमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा ॥ ५ ॥

किन्तु चक्षुर्विषयातिक्रान्तेषु कपोतेषु स व्याधः सखेदं निवृत्तः । अथ लुब्धकं निवृत्तं दृष्ट्वा ते पक्षिण ऊचुः । किमिदानीं कर्तुमुचितम् ।

चित्रग्रीव उवाच । अस्माकं मित्रं हिरण्यको नाम मूषकराजो गण्डकीतीरे चित्रवने निवसति । सोऽस्माकं पाशांश्छेत्स्यति । इत्यालोच्य सर्वे हिरण्यकविवरसमीपं प्राप्ताः । ततो हिरण्यकः कपोतराजस्य वचनं प्रत्यभिज्ञाय ससम्भ्रमं शतद्वारात् स्वविवराद् बहिर्निःसृत्याब्रवीत् । आः पुण्यवानस्मि । प्रियसुहृन्मे चित्रग्रीवः समायातः । तथा हि—

यस्य मित्रेण सम्भाषा यस्य मित्रेण संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यभाक् ॥ ६ ॥

पाशबद्धांश्चैतान् दृष्ट्वा सविस्मयः क्षणं तूष्णीं स्थित्वोवाच । सखे, किमेतत् । चित्रग्रीवोऽवदत् । वयस्य, अस्माकं कर्मणः फलमेतत् । एतच्छ्रुत्वा हिरण्यकश्चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरमुपासर्पत् । तदा चित्रग्रीव उवाच । मित्र, मा मैवम् । अस्मदाश्रितानामेषां तावत् पाशांश्छिन्धि । मम पाशान् पश्चाच्छेत्स्यसि । इत्याकर्ण्य हिरण्यकः प्रहृष्टमनाः पुलकितः सन्नब्रवीत् । साधु, सखे साधु । अनेनाश्रितवात्सल्येन त्रैलोक्यस्यापि प्रभुत्वं त्वयि युज्यते । एवमुक्त्वा तेन सर्वेषां

बन्धनानि च्छिन्नानि । आतिथ्यं च सम्पादितम् । ततश्चित्रग्रीवस्तमामन्त्र्य सपरिवार इष्टदेशान् ययौ । हिरण्यकोऽपि स्वविवरं प्रविष्टः ।

[ हितोपदेशे ]

---

**प्रश्नाः**—किमर्थं भूमिमवतीर्णाः कपोताः ? क उपायश्चिन्तितश्चित्रग्रीवेण जालादात्मानमनुचरांश्च मोचयितुम् ? जालमादाय कुत्रागच्छंस्ते सर्वे कपोताः ? कथं निकृन्तितं हिरण्यकेन तज्जालम् ?

**वर्णनम्**—व्याधानां दिनक्रमं विस्तरेण वर्णयत ।

**तात्पर्यम्**—कपोतानां के गुणदोषा अत्र दृश्यन्ते । केन च संरक्षितास्तेषां प्राणाः । 'संहतिः कार्यसाधिका' इति यस्या अभिप्रायो वर्तते तादृशीं काञ्चन कथां रचयत ।

**शब्दप्रयोगाः**—( १ ) अस्यां कथायां 'सतिसप्तम्या' उदाहरणानि प्रदर्शयत । ( २ ) 'मलिनीभवन्ति'—कीदृशोऽयं शब्दप्रयोगः । अन्यान्यप्येतादृशान्युदाहरणानि विचिनुत ।

---

# सप्तमः पाठः ।

## हेमन्तवर्णनम् ।



उटजे वसतस्तस्य राघवस्य महात्मनः ।
शरद्व्यपाये हेमन्त ऋतुरिष्टः समागतः ॥ १ ॥
स कदाचित् प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥
प्रह्वः कलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥

अयं स कालः सम्प्राप्तः प्रियो यस्ते प्रियंवद ।
अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥
नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥
प्राज्यकामा जनपदाः सम्पन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ६ ॥
सेवमाने दिशं सूर्ये दृढमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ७ ॥
प्रकृत्या हिमकोषाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ८ ॥
अत्यन्तसुखसञ्चारा मध्याह्ने स्पृशतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ ९ ॥
मृदुसूर्याः सुनीहाराः पटुशीताः समाहिताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति साम्प्रतम् ॥ १० ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतरायामास्त्रियामा यान्ति साम्प्रतम् ॥ ११ ॥
रविसङ्क्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १२ ॥
ज्योत्स्ना तुषारमलिना पौर्णिमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ॥ १३ ॥
प्रकृत्या शीतलस्पर्शो हिमवृद्धश्च साम्प्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १४ ॥

वाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १५ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ॥ १६ ॥
अवश्यायनिपातेन किञ्चित् प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ १७ ॥
स्पृशन् सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ १८ ॥
एते हि समुपासीना विहगा जलचारिणः ।
न गाहन्ते जलं स्वच्छमप्रगल्भा इवाहवम् ॥ १९ ॥
अवश्यायतमोन्नद्धा नीहारतमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २० ॥
वाष्पसंच्छन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकैस्तीरैः सरितो भान्ति साम्प्रतम् ॥ २१ ॥
तुषारपतनाच्चैव मृदुत्वाद् भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २२ ॥
जराजर्जरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ २३ ॥

[ वाल्मीकिरामायणे ]

---

**प्रश्नाः**–कति ऋतवः संवत्सरस्य ? कस्य ऋतोः पश्चाद् हेमन्त आगच्छति ? कुत्र वर्तते सूर्यस्तदा ? कीदृशो वायुरस्मिन् ऋतौ ? कीदृशी पृथिवी च दृश्यते ?

जनपदाश्च किं लभन्ते ? किं कुर्वन्ति नृपास्तदा ? कथं शोभते चन्द्रो हेमन्ते ? किं दृश्यते नद्यां वने च ? कथं व्यवहरन्ति पशवो विहगाश्च तदा ?

**परीक्षणम्**--किमन्तरं काव्यस्यैतस्य 'वर्षावर्णनस्य' च। को रसो मनसि प्रादुर्भवति काव्यस्यास्य पठनेन । अपि सदृशोऽयं रसो हेमन्तजस्य मनुजभावस्य :। सप्तमे श्लोके कयोपमितोत्तरा दिक् । विशेषणपदानां क्रियाविशेषणस्य चौचित्यं विशदीकुरुत । द्वादशे श्लोके 'निश्वासान्धः' इति पदस्यौचित्यं दर्शयत । किमक्षरं बहुधा विद्यते द्वितीयायां पंक्तौ । कस्तस्य पठनस्य परिणामः । एकोनविंशतितमे श्लोके केनोपमिताः खगाः । किं कारणं तादृशस्य व्यवहारस्य । स्वभावोक्तेरन्यान्युदाहरणानि प्रदर्शयत ।

**काव्यवृत्तम्**--अस्य काव्यस्य वृत्तं अनुष्टुभ् । ( लक्षणादिकं चतुर्थे पाठे द्रष्टव्यम् । )

---

# अष्टमः पाठः ।

## विग्रहः ।



अस्ति कर्पूरद्वीपे पद्मकेलिनामधेयं सरः । तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति । स च सर्वैर्जलचरपक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः । एकदासौ राजहंसः सुविस्तीर्णकमलपर्यङ्के सुखासीनः परिवारपरिवृतस्तिष्ठति । ततः कुतश्चिद्देशादागत्य दीर्घमुखो नाम बकः प्रणम्योपविष्टः । राजोवाच । दीर्घमुख, देशान्तरादागतोऽसि । वार्तां कथय । स ब्रूते । देव, अस्ति महती वार्ता । तामाख्यातुकाम एव सत्वरमागतोऽहम् । श्रूयताम् ।

अस्ति जम्बुद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति । तस्यानुचरैश्चरद्भिः पक्षिभिरहं दग्धारण्यमध्ये

चरन्नवलोकितः पृष्टश्च । कस्त्वं कुतः समायातोऽसि । तदा मयोक्तम् । कर्पूरद्वीपस्य राजचक्रवर्तिनो हिरण्यगर्भस्य राजहंसस्यानुचरोऽहम् । कौतुकाद्देशान्तरं द्रष्टुमागतोऽस्मि । एतच्छ्रुत्वा पक्षिभिरुक्तम् । अनयोर्देशयोः को देशो भद्रतरो राजा च । मयोक्तम् । आः किमेवमुच्यते । महदन्तरम् । यतः कर्पूरद्वीपः स्वर्ग एव राजहंसश्च द्वितीयः स्वर्गपतिः । अत्र मरुस्थले पतिता यूयं किं कुरुथ ? आगच्छतास्मद्देशम् । ततोऽस्मद्वचनमाकर्ण्य सर्वे सकोपा बभूवुः । ततस्तैः पक्षिभिः कोपादुक्तम् । केनासौ राजहंसः कृतो राजा ? ततो मयोपजातकोपेनोक्तम् । युष्मदीयमयूरः केन राजा कृतः ? तत एतच्छ्रुत्वा ते सर्वे मां हन्तुमुद्यताः । ततो मयापि स्वविक्रमो दर्शितः । ततस्तैः पक्षिभिरुक्तम् । अरे पाप बक, अस्माकं भूमौ चरन्नस्माकं स्वामिनमधिक्षिपसि । तन्न क्षन्तव्यमिदानीम् । इत्युक्त्वा ते सर्वे मां चञ्चुभिर्हत्वा सकोपा ऊचुः । पश्य रे मूर्ख, हंसस्तव राजा सर्वथा मृदुः । तस्य राज्येऽधिकार एव नास्ति । यत एकान्ततो मृदुः करतलगतमप्यर्थं रक्षितुमक्षमः । कथं स पृथिवीं शास्ति । राज्यं वा तस्य किम् । त्वं च कूपमण्डूकस्तेन तदाश्रयमुपदिशासि । मयोक्तम् । स एवास्मत्प्रभू राजहंसो महाप्रतापोऽतिसमर्थः । त्रैलोक्यस्यापि प्रभुत्वं तत्र युज्यते, किमुत राज्यम् । तदाहं तैः पक्षिभिर्दुष्ट, कथमस्मद्भूमौ चरसीत्यभिधाय राज्ञश्चित्रवर्णस्य समीपं नीतः । ततो राज्ञः पुरो मां प्रदर्श्य तैः प्रणम्योक्तम् । देव, अवधीयतामेष दुष्टो बको यदस्मद्देशे चरन्नपि देवपादानधिक्षिपति । राजाह । कोऽयम् ? कुतः समागतः ? त ऊचुः । हिरण्यगर्भनाम्नो राजहंसस्यानुचरः कर्पूरद्वीपादागतः । अथाहं गृध्रेण मन्त्रिणा पृष्टः । कस्तत्र मुख्यो मन्त्रीति । मयोक्तम् । सर्वशास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः ।

गृध्रो ब्रूते । युज्यते । स्वदेशजोऽसौ । अत्रान्तरे शुकेनोक्तम् । देव, कर्पूरद्वीपादयो लघुद्वीपा जम्बुद्वीपान्तर्गता एव । तत्रापि देवपादाना-मेवाधिपत्यम् । ततो राज्ञाप्युक्तम् । एवमेव । ततो मयोक्तम् । यदि वचनमात्रेणैवाधिपत्यं सिद्ध्यति तदा जम्बुद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य स्वाम्यमस्ति । शुक उवाच । कथमत्र निर्णयः ? मयोक्तम् । सङ्ग्राम एव । राज्ञा विहस्योक्तम् । स्वस्वामिनं गत्वा सज्जीकुरु । तदा मयोक्तम् । स्वदूतोऽपि प्रस्थाप्यताम् । राजोवाच । कः प्रयातु दौत्येन ? गृध्रो वदति । सन्त्येव दूता बहवः । किन्तु ब्राह्मण एव कर्तव्यः । राजाह । ततः शुक एव व्रजतु । शुक, त्वमेवानेन सह गत्वाभिलषितं ब्रूहि । शुको ब्रूते । यथाज्ञापयति देवः । किन्त्वयं दुर्जनो बकः । तदनेन सह न गच्छामि । ततो मयोक्तम् । भ्रातः शुक, किमेवं ब्रवीषि ? मां प्रति यथा श्रीमद्देवपादास्तथा भवानपि । शुकेनोक्तम् । अस्त्वेवम् । किन्तु दुर्जनत्वं च भवतो वाक्यादेव ज्ञातं यदनयोर्भूपालयोर्विग्रहे भवद्वचनमेव निदानम् । ततोऽहं तेन राज्ञा यथाव्यवहारं सम्पूज्य प्रस्थापितः । शुकोऽपि मम पश्चादागच्छन्नास्ते । एतत्सर्वं परिज्ञाय यथाकर्तव्य-मनुसन्धीयताम् ।

[ हितोपदेशे ]

---

**प्रश्नाः**—केषामधिपतिः स राजहंसः ? केन कारणेन चित्रवर्णस्यानुचराः कुपिताः ? कथं दीर्घमुखो राज्ञश्चित्रवर्णस्य समीपं नीतः ? कथं शुकेन कलहाग्निर्वर्धितः ? को दूतो राज्ञा चित्रवर्णेन प्रेषितः ? किमर्थं स दीर्घमुखेन सह नागच्छत् ?

**शब्दप्रयोगाः**—आख्यातुकामः दीर्घमुखः—आख्यातुमिच्छन् दीर्घमुखः ।

| | | | |
|---|---|---|---|
| तद्वदेव—गन्तुकामः | पथिकः | प्रस्थातुकामः ——— | |
| योद्धुकामः | ——— | गातुकामः ——— | |
| पठितुकामः | ——— | ——— | बालकः । |
| ——— | पुरोहितः | पतिं ——— | जानकी । |

( उपरिनिर्दिष्टाः शब्दाः वाक्येषु प्रयोक्तव्याः । )

**समासाः**—देशान्तरम्—अन्यः देशः देशान्तरम् । ( कर्मधारयः ) तथैव—भाषान्तरम्, कथान्तरम्, सिंहान्तरम्, इत्यादयः ।

( एते समासाः सदा नपुंसकलिङ्गाः । )

पक्षिराजः—पक्षिणां राजा पक्षिराजः । तथैव महाराजः, रसराजः, मृगराजः ।

---

# नवमः पाठः ।

## व्यसनविमोक्षः ।



अस्ति कस्मिंश्चिद् ग्रामे धनिको रत्नपालो नाम । स च बाल्यात्प्रभृत्येव संरूढदुर्जनसंसर्गो मद्यं पातुमारेभे । यौवने पुनः समुपाचिनोद् व्यसनमेतदेतस्य । तत्र चातिमात्रमासक्तोऽयमभ्यभूयत केनापि रोगेण । तथापि क्षणमात्रमपि न सेहे विरहं मदिरायाः । स्वभावो ह्ययं व्यसनानां यदात्मन्यासक्तानेकान्ततो वशीकुर्वन्त्येतानीति । नैव किलोत्पादयन्ति विरागं नाम ।

अथैकदातिभूमिं गतं व्याधिमिमं चिकित्सितुमाहूतः प्रज्ञाधनो नाम भिषक्प्रवरो रत्नपालमवादीत् । भद्र ! परित्यज्यतां जीवितहानिप्रदोऽयं मदिरास्वादाभिलाष इति । स पुनर्मूढमतिः, वैद्यराज ! वरं मे मरणं

न पुनर्मदिरापरित्याग इति प्रतिजगाद। तदाकर्ण्य यथार्थनामा प्रज्ञाधनो विचिन्त्यावादीत्। श्रेष्ठिन्! भवत्वेवम् किन्तु मयोपदिश्यमानेनैव विधिना सेव्यतां मद्यमिति। अथ तथेति रत्नपालेनाङ्गीकृते प्रज्ञाधनः प्रतिदिनमेकवृद्धया गुटिकाः समर्प्य निदिदेश। भद्रमुख, अतःपरमपरिवर्त्य कूपीमेककूपीमात्रमेव सेव्यतां प्रतिदिनं मद्यम्। प्रथमं तावद्गुटिकाः कूपिकायां निक्षिप्य ततोऽसौ पूर्यतां मद्येन। ततोऽधिकं तु नासेवनीयं कदाचिदपि। तद्धि समासेव्यमानमपहरिष्यति प्राणानिति। अथ यथा यथा ववृधिरे गुटिकास्तथा तथा रत्नपालस्य तदनुरागेण सह मद्यमपि जह्रास। कतिपयैस्तु दिवसैर्गुटिकाभिः कूपिकाभ्यन्तरं नीरन्ध्रितमासीत्। प्रापच्च निःशेषतां व्यसनं रत्नपालस्य। प्राशाम्यच्च 'संक्षेपतः क्रियायोगो निदानपरिवर्जनम्' इति न्यायात्तदीयो व्याधिः।

परिहर्तुं न तु शक्यं युगपद् व्यसनं सुदूरहृतहृदयम्।
क्रमशस्तु हाप्यमानं सुखेन संक्षीणतां याति॥ १॥

[ संस्कृतचन्द्रिकायाम् ]

---

**प्रश्नाः**—कथं रत्नपालस्य मद्यपानव्यसनं संरूढम्? कः स्वभावो व्यसनानाम्? का युक्तिर्योजिता प्रज्ञाधनेन रत्नपालस्य व्यसननिवारणाय? गुटिकावर्धनात् किं किं क्षयमुपगतम्? कथं तर्हि व्यसनानि परिहर्तव्यानि?

**समासाः**—( १ ) संरूढदुर्जनसंसर्गः। प्रज्ञाधनः। नीरन्ध्रितम्। निदानपरिवर्जनम्। सुदूरहृतहृदयम्। ( एतेषां समासानां विग्रहान् कृत्वा नामानि कथयत। )

( २ ) स्वभावो ह्ययं व्यसनानाम्...।

अतिभूमिं गतं व्याधिम्...।

न सेहे विरहं मदिरायाः।

गुटिकाभिः प्रपूरितायां कूपिकायां मद्यस्य अवकाशो नास्ति।

( अधोरेखितानां शब्दानां समासाः क्रियन्ताम्। )

**प्रयोगान्तराणि**--( १ ) परिहर्तुं न तु शक्यं युगपद् व्यसनं सुदूरहृत-हृदयम् । ( कर्तरि ) । ( २ ) प्राशाम्यद् रत्नपालस्य व्याधिः । ( अत्र 'रत्नपाल' इति पदं कर्तृपदे प्रयोक्तव्यम् । ) । ( ३ ) स भिषग्वरो यथार्थनामा आसीत् । ( कर्तृस्थाने 'नाम' इति पदं प्रयोज्यम् । ) । ( ४ ) अयमभ्यभूयत केनापि रोगेण । ( कर्तरि ) ।

---

# दशमः पाठः ।

## सदुपदेशः



त्रिषु देवेषु महान्तं भृगुर्बुभुत्सुः परीक्ष्य हरिमेकम् ।
मेनेऽधिकं महिम्ना सेव्यः सर्वोत्तमो विष्णुः ॥ १ ॥
निर्वासितो हितेप्सुर्विभीषणो रावणेन लङ्कायाः ।
तन्नाशहेतुरासीन्नहि निजबन्धुर्निरोद्धव्यः ॥ २ ॥
हृतराज्यदर्पसारं सुयोधनं निग्रहीतुमपि शक्ताः ।
प्रोषुर्वनेषु पार्था धीरः समयं प्रतीक्षेत ॥ ३ ॥
सहधर्मिणीं वनान्ताद्दशरथसूनोर्जहार दशवक्त्रः ।
बन्धनमाप समुद्रो न दुर्जनस्यान्तिके निवसेत् ॥ ४ ॥
सुग्रीवो रघुपतिना हृतदारेणोपगम्य हृतदारः ।
दृढमाबबन्ध सख्यं समानदुःखः सखा कार्यः ॥ ५ ॥
सन्दीपिताग्रपुच्छो बद्धतनुस्ताडितोऽपि रक्षोभिः ।
लङ्कां मारुतिरदहद्विपदि विजह्यान्न शूरत्वम् ॥ ६ ॥
शतयोजनततमब्धिं विलङ्घ्य वातात्मजोऽविशल्लङ्काम् ।
धीराग्रतःसरोऽभूद्यशोऽर्जयन् साहसं कुर्यात् ॥ ७ ॥

अदिशल्लक्ष्मणहेतोर्मारुतिमानेतुमोषधीं रामः ।
तामानयत् स दूराद्धुर्यः कार्ये नियोक्तव्यः ॥ ८ ॥
हन्तुं देवकतनयां वसुदेवेनोद्यतायुधः कंसः ।
मधुरोक्तिभिरनुनीतः साम्ना मूर्खं वशे कुर्यात् ॥ ९ ॥
शिशुपालः क्रतुकाले हरिमर्हं गर्हयन्ननर्होक्त्या
तत्क्षणमियाय नाशं न महान्तं क्वापि गर्हेत ॥ १० ॥
सङ्क्षुभ्य पादघातैः कालिन्द्यां कालियं कृतागस्कम् ।
निरयापयन् मुकुन्दो दुष्टे दण्डः प्रयोक्तव्यः ॥ ११ ॥
निगमागमैकवेत्ता द्रोणस्तप्त्वा तपोऽर्थमन्विच्छन् ।
धानुष्कवृत्तिरासीद्धर्मं चार्थं च सेवेत ॥ १२ ॥
अधिशम्भुमौलि निवसन्नेककलात्मा यथार्च्यते चन्द्रः ।
न तथा स पूर्णबिम्बः श्रयेन्महान्तं महत्त्वाय ॥ १३ ॥
पृथुकोपहारपाणिर्हरिं सखायं प्रपद्य दीनात्मा ।
श्रीमानभूत् सुदामा श्रयेत सन्मित्रमापत्सु ॥ १४ ॥
शप्त्वाम्बरीषमार्यं दुर्वासाः कोपनो निरागस्कम् ।
चक्रेण तापितोऽभून्न विदध्यात् क्रोधमस्थाने ॥ १५ ॥
युधि कुरवः कृतवैरा वीरं व्यूहं विशन्तमभिमन्युम् ।
बहवो निजघ्नुरेकं नैको रिपुमण्डलं प्रविशेत् ॥ १६ ॥
क्षात्रं विमृश्य धर्मं मान्यैर्गुरुभिर्द्विजैः समं समरे ।
युयुधेऽर्जुनो धनुष्मान् घोरमपि स्वं चरेद्धर्मम् ॥ १७ ॥
शरतल्पमधिशयानाद्भीष्मादाकर्ण्य धर्मजो धर्मान् ।
दुःखं जहौ दुरन्तं प्रष्टव्याः सत्पथं वृद्धाः ॥ १८ ॥
हरिरम्बुधिमथनोत्थां सुधां सुरेभ्यः सुरां सुरारिभ्यः ।

व्यतरत् समं यथार्हं योग्यं योग्याय दातव्यम् ॥ १९ ॥
मातुर्वाक्शरविद्धः पञ्चाब्दो दुष्करं तपस्तप्त्वा ।
ध्रुव उच्चैः पदमभजत् पुंसा व्यवसायिना भाव्यम् ॥ २० ॥

[ उपदेशशतके ]

**काव्यवृत्तम्**—इदमार्यावृत्तं भवति । तथा हि आर्यालक्षणम्—

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥ १ ॥

दीर्घवर्णस्य द्वे मात्रे, ह्रस्वस्य चैका मात्रा गण्यते ।

श्लोकस्य चत्वारः पादाः सन्ति । यथा—

| | |
|---|---|
| क्षात्रं विमृश्य धर्मं | मान्यैर्गुरुभिर्द्विजैः समं समरे । |
| २+२ + १+२+१ + २+२ | २+२+१+१+२+१+२ +१+२ + १+१+२ |
| (१२) | (१८) |
| युयुधेऽर्जुनो धनुष्मान् | घोरमपि स्वं चरेद्धर्मम् ॥ १७ ॥ |
| १+१+२+१+२ + १+२+२ | २+१+१+२ + २ + १+२+२+२ |
| (१२) | (१५) |

**सामान्यनीतिः**--प्रथमे श्लोके 'सेव्यः सर्वोत्तमो विष्णुः' इति कस्याः कथायास्तात्पर्यं कविनोद्धृतम् ? ( एतादृशानि सामान्यनीतिवाचकानि वाक्यानि प्रदर्शयत । )

**प्रयोगविशेषाः**--१ निर्वासितो बिभीषणो रावणेन । २ कालीयं निरयापयन्मुकुन्दः । ३ द्रोणो धानुष्कवृत्तिरासीत् । ४ पुंसा व्यवसायिना भाव्यम् । ( एतेषामभिप्रायो विशदीक्रियताम् । )

---

# एकादशः पाठः ।

## स्वामिभक्तिः ।



अथ वीरवरो नाम राजपुत्रः कुतश्चिद्देशादागत्य राजद्वारमुपगम्य प्रतीहारमुवाच । अहं तावद्वर्तनार्थी राजपुत्रः । राजदर्शनं कारय । ततस्तेनासौ राजदर्शनं कारितो ब्रूते । देव, यदि मया सेवकेन प्रयोजनमस्ति तदस्मद्वर्तनं क्रियताम् ।

शूद्रक उवाच—किं ते वर्तनम् ?

वीरवरो ब्रूते—प्रत्यहं सुवर्णचतुष्टयम् ।

राजाह—का ते सामग्री ?

वीरवरो ब्रूते—द्वौ बाहू तृतीयश्च खड्गः ।

राजाह—नैतच्छक्यम् ।

तच्छ्रुत्वा वीरवरः प्रणम्य चलितः । अथ मन्त्रिभिरुक्तम् । देव, दिनचतुष्टयस्य वर्तनं दत्त्वा ज्ञायतामस्य स्वरूपम् । किमुपयुक्तोऽयमेतावद्वर्तनं गृह्णात्यनुपयुक्तो वेति । ततो मन्त्रिवचनादाहूय वीरवराय ताम्बूलं दत्त्वा सुवर्णचतुष्टयं दत्तम् । तद्विनियोगश्च राज्ञा सुनिभृतं निरूपितः । तदर्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यश्च दत्तम् । स्थितस्यार्धं दुःखितेभ्यः । तदवशिष्टं भोज्यव्ययविलासव्ययेन व्ययितम् । एतत्सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते । यदा च राजा स्वयं समादिशति तदा स्वगृहमपि याति ।

अथैकदा कृष्णचतुर्दश्यां रात्रौ राजा सकरुणं क्रन्दनध्वनिं शुश्राव ।

शूद्रक उवाच—कः कोऽत्र द्वारि ?

तेनोक्तम्—देव, अहं वीरवरः ।

राजोवाच—क्रन्दनानुसरणं क्रियताम् ।

वीरवरो यथाज्ञापयति देव इत्युक्त्वा चलितः । राज्ञा च चिन्तितम् । नैतदुचितम् । अयमेकाकी राजपुत्रो मया सूचीभेद्ये तमसि प्रेरितः । तदनुगत्वा किमेतदिति निरूपयामि । ततो राजापि खड्गमादाय तदनुसरणक्रमेण नगराद्बहिर्निर्जगाम । गत्वा च वीरवरेण सा रुदती रूपयौवनसम्पन्ना सर्वालङ्कारभूषिता काचित् स्त्री दृष्टा पृष्टा च । का त्वम् । किमर्थं रोदिषीति । स्त्रियोक्तम् । अहमेतस्य शूद्रकस्य राज्ञो लक्ष्मीः । चिरादेतस्य भुजच्छायायां महता सुखेन विश्रान्ता । इदानीमन्यत्र गमिष्यामि । वीरवरो ब्रूते । यत्रापायः सम्भवति तत्रोपायोऽप्यस्ति । तत्कथं स्यात् पुनरिहालम्बनं भगवत्याः ? लक्ष्मीरुवाच । यदि त्वमात्मनः पुत्रं शक्तिधरं द्वात्रिंशल्लक्षणोपेतं भगवत्याः सर्वमङ्गलाया उपहारीकरोषि तदाहं पुनरत्र सुचिरं सुखं निवसामि । इत्युक्त्वादृश्याभवत् ।

ततो वीरवरेण स्वगृहं गत्वा निद्राणा स्ववधूः प्रबोधिता पुत्रश्च । तौ निद्रां परित्यज्योत्थायोपविष्टौ । वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान् । तच्छ्रुत्वा सानन्दः शक्तिधरो ब्रूते । धन्योऽहमेवम्भूतः स्वामिराज्यरक्षार्थं यस्योपयोगः । तत्तात, कोऽधुना विलम्बस्य हेतुः ? कदापि तावदेवंविध एव कर्मण्येतस्य देहस्य विनियोगः श्लाघ्यः । यतः—

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्तं वरं त्यागो विनाशे नियते सति ॥ १ ॥

शक्तिधरमातोवाच । यद्येतन्न कर्तव्यं तत्केनान्येन कर्मणा मुल्यस्य महावर्तनस्य निष्क्रयो भविष्यति । इत्यालोच्य सर्वे सर्वमङ्गलायाः स्थानं

गताः । तत्र सर्वमङ्गलां सम्पूज्य वीरवरो ब्रूते । देवि, प्रसीद । विजयतां विजयतां शूद्रको महाराजः । गृह्यतामयमुपहारः । इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद । ततो वीरवरश्चिन्तयामास, गृहीतराजवर्तनस्य तावन्निस्तारः कृतः । अधुना निष्पुत्रस्य मे जीवनं विडम्बनम् । इत्यालोच्यात्मनः शिरश्छिन्नवान् । ततः स्त्रियापि स्वामिनः पुत्रस्य च शोकार्तया तदनुष्ठितम् । एतत्सर्वं श्रुत्वा दृष्ट्वा च स राजा साश्चर्यं चिन्तमायास ।

जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥ २ ॥

तदेतत्परित्यक्तेन मम राज्येनाप्यप्रयोजनम् । ततः स्वशिरश्छेत्तुमुल्लासितः खड्गः शूद्रकेणापि । अथ भगवत्या सर्वमङ्गलया प्रत्यक्षभूतया राजा हस्ते धृत उक्तश्च । पुत्र, प्रसन्नास्मि ते । एतावता साहसेनालम् । जीवनान्तेऽपि तव राज्यभङ्गो नास्ति । राजा च साष्टाङ्गपातं प्रणम्योवाच । देवि, किं मे राज्येन । जीवितेन वा किं प्रयोजनम् । यद्यहमनुकम्पनीयस्तदा ममायुःशेषेणायं सदारपुत्रो वीरवरो जीवतु । अन्यथाहं यथाप्राप्तां गतिं गच्छामि । भगवत्युवाच । पुत्र, अनेन ते सर्वोत्कर्षेण भृत्यवात्सल्येन च सर्वथा सन्तुष्टास्मि । गच्छ विजयी भव । अयमपि सपरिवारो राजपुत्रो जीवतु । इत्युक्त्वा देव्यदृश्याभवत् । ततो वीरवरः सपुत्रदारः प्राप्तजीवनः स्वगृहं गतः । राजापि तैरलक्षितः सत्वरं प्रासादगर्भं गत्वा तथैव सुप्तः ।

अथ वीरवरो द्वारस्थः पुनर्भूपालेन पृष्टः सन्नुवाच । देव, सा रुदती स्त्री मामवलोक्यादृश्याभवत् । न काप्यन्या वार्ता विद्यते ।

तद्वचनमाकर्ण्य सन्तुष्टो राजा साश्चर्यमचिन्तयत्, कथमयं श्लाघ्यो महासत्त्वः। यतः—

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः
दाता नापात्रवर्षी च प्रगल्भः स्यादनिष्ठुरः ॥ ३ ॥

एतन्महापुरुषलक्षणमेतस्मिन् सर्वमस्ति। ततः स राजा प्रातः शिष्ट-सभां कृत्वा सर्ववृत्तान्तं प्रस्तुत्य प्रसादात्तस्मै कर्नाटराज्यं ददौ।

[ हितोपदेशे ]

---

**प्रश्नाः**—किमर्थं राजदर्शनाय गतो वीरवरः? कः समयः कृतस्तेन राज्ञा सह? कथं प्रथमदिनस्य वर्तनं वीरवरेण व्ययितम्? रात्रौ राज्ञा प्रेरितो वीरवरः किमपश्यत्? क उपायः कथितो राजलक्ष्म्या पुनर्निवासाय? तदा वीरवरेण किं कृतम्? तत्तस्य चेष्टितं दृष्ट्वा शूद्रकेण किमारब्धम्?

**स्वभावपरिचयः**—वीरवरस्य, शूद्रकस्य, वीरवरपत्न्याश्च स्वभावान् वर्णयत।

**प्रयोजकानि ( णिचि ) क्रियापदानि**—

| ( शुद्धान्तवाक्यम् ) | ( प्रयोजकवाक्यम् ) |
|---|---|
| १ वीरवरो राजदर्शनं करोति। | प्रतीहारो वीरवरेण वीरवरं वा राज-दर्शनं कारयति। |
| २ योद्धारः स्वर्गं गच्छन्ति। | देवो योद्धॄन् स्वर्गं गमयति। |
| ३ कन्दुको भूमौ पतति। | कुमारः कन्दुकं भूमौ पातयति। |
| ४ जलं क्षेत्रे प्रसरति। | कृषीवलो जलं क्षेत्रे प्रसारयति। |
| ५ मयूरो नृत्यति। | मेघा मयूरं नर्तयन्ति। |
| ६ वनस्पतिः शुष्यति। | निदाघो वनस्पतिं शोषयति। |
| ७ वनस्पतिः पुष्यति। | पर्जन्यो वनस्पतिं पोषयति। |
| ८ हस्तो मुखे प्रविशति। | कुमारो हस्तं मुखे प्रवेशयति। |
| ९ बालकः स्वपिति। | माता बालकं स्वापयति। |

( भूत-भविष्यत्कालेऽपि प्रयोजकः )

| | |
|---|---|
| १ पृथ्वी सलिले आस्त । | देवः पृथ्वीं सलिले आसयत् । |
| २ दत्याः समरे अनश्यन् । | रामो दैत्यान् समरे अनाशयत् । |
| ३ विष्णुः प्राबोधत् । | निर्जरा विष्णुं प्राबोधयन् । |
| ४ जनाः कामेन मुह्यन्ति मोहिष्यन्ति च । | कामो जनान् मोहयति मोहयिष्यति च । |
| ५ वृक्षो रोहति-अरोहत्-रोक्ष्यति । | मालाकारो वृक्षं रोहयति रोपयति वा-अरोहयत् अरोपयत् वा-रोहयिष्यति रोपयिष्यति वा । |
| ६ सीता गोदावर्यां अस्नात् । | रामः सीतां गोदावर्यां अस्नापयत् । |
| ७ चन्द्रः क्षयति ग्लयति च । | विधिश्चन्द्रं क्षपयति ग्लपयति च । |
| ८ मन्दरः सागरे तिष्ठति । | देवा मन्दरं सागरे स्थापयन्ति । |

---

# द्वादशः पाठः ।

## वटूनां स्वैरालापः ।



एकः—सौधातके दृश्यतामद्य भूयिष्ठसन्निवापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मिकेराश्रमपदस्य । तथाहि—

नीवारौदनमण्डमुष्णमधुरं सद्यः प्रसूताप्रिया—
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १ ॥

सौधातकिः—स्वागतमनेकप्रकाराणां जीर्णकूर्चानामनध्यायकारणानाम्।

प्रथमः—( विहस्य ) अपूर्वः कोऽपि ते बहुमानहेतुर्गुरुषु सौधातके।

सौधातकिः—भो दाण्डायन, किंनामधेय एष महतः स्थविरसार्थस्य धुरन्धरोऽद्यातिथिरागतः।

दाण्डायनः—धिक् प्रहसनम्। नन्वयमृष्यश्रृङ्गाश्रमादरुन्धतीपुरस्कृतान् महाराजदशरथस्य दारानधिष्ठाय भगवान्वसिष्ठः प्राप्तः। तत्किमेवं प्रलपसि?

सौधातकिः—हुं वसिष्ठः।

दाण्डायनः—अथ किम्।

सौधातकिः—मया पुनर्ज्ञातं व्याघ्रो वा वृको वैष इति।

दाण्डायनः—आः किमुक्तं भवति।

सौधातकिः—तेन परापतितेनैव सा वराकी कपिला कल्याणी मडमडायिता।

दाण्डायनः—'समांसो मधुपर्क' इत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं महाजं वा निर्वपन्ति गृहमेधिनः। तं हि धर्मं धर्मसूत्रकाराः समामनन्ति।

सौधातकिः—भो निगृहीतोऽसि।

दाण्डायनः—कथमिव।

सौधातकिः—येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता। अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः। वत्सतरी पुनर्विसर्जिता।

दाण्डायनः—अनिवृत्तमांसानामेवं कल्पमृषयो मन्यन्ते। निवृत्तमांसस्तु तत्रभवाञ्जनकः।

सौधातकिः—किं निमित्तम्?

दाण्डायनः—स तदैव देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः। तथास्य कतिपये संवत्सराश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य।

सौधातकिः—ततः किमित्यागतः।

दाण्डायनः—चिरन्तनप्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुम्।

सौधातकिः—अप्यद्य सम्बन्धिनीभिः समं संवृत्तमस्य दर्शनं न वेति।

दाण्डायनः—सम्प्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता यत्स्वयमुपेत्य वैदेहो द्रष्टव्य इति।

सौधातकिः—यथैते स्थविराः परस्परं मिलितास्तथावामपि बटुभिः सह मिलित्वानध्यायमहोत्सवं खेलन्तौ मानयावः।

[ उत्तररामचरिते ]

---

**नाट्यम्**—एष संवादः कुमाराभ्यां छात्रगणाभ्यां वा नाटयितव्यः।

**वर्णनम्**—शिष्टागमने यः कोऽपि समारम्भो वाल्मीकेराश्रमपदे कृतस्तस्य वर्णनं क्रियताम्। किं पुनः स्वरूपमेतादृशस्य समारम्भस्य नगरे दृश्यते।

**स्वभाववर्णनम्**—कीदृशः स्वभावः सौधातकेः। एतयोश्छात्रयोः कतरः पुनः परिणतबुद्धिर्दृश्यते।

**वृत्तम्**—प्रथमश्लोकस्य वृत्तं कथ्यताम्।

**प्रयोजकानि**

| ( शुद्धान्तवाक्यानि ) | ( प्रयोजकवाक्यानि ) |
|---|---|
| १ कुमारो देवं नमति । | पिता कुमारेण देवं नमयति नामयति वा । |
| २ बल्लव ओदनं पचति । | स्वामी बल्लवेन ओदनं पाचयति । |
| ३ दशरथो भरताय राज्यं यच्छति । | कैकेयी दशरथेन भरताय राज्यं दापयति । |
| ४ हनूमान् राक्षसान् हन्ति । | रामो हनुमता राक्षसान् घातयति । |
| ५ अश्वा जलं पिबन्ति । | सारथिः अश्वान् जलं पाययति । |
| ६ वृक्षात् फलानि जायन्ते । | वृक्षः फलानि जनयति । |
| ७ रामो यज्ञम् आरभते । | वसिष्ठो रामेण यज्ञम् आरम्भयति । |
| ८ युधिष्ठिरो राज्यं लभते । | श्रीकृष्णो युधिष्ठिरेण राज्यं लम्भयति । |
| ९ पाण्डवाः कौरवान् जयन्ति । | श्रीकृष्णः पाण्डवैः कौरवान् जापयति । |
| १० सेवको भारं नयति वहति वा । | स्वामी सेवकेन भारं नाययति वाहयति वा । |
| ११ भरतः प्रजाः पाति । | वसिष्ठो भरतेन प्रजाः पालयति । |
| १२ भृत्यः कार्यं करोति । | स्वामी भृत्येन भृत्यं वा कार्यं कारयति । |
| १३ बाला पुष्पाणि क्रीणाति । | माता बालया पुष्पाणि क्रापयति । |

---

# त्रयोदशः पाठः ।

## श्रावणवधः ।



अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण ॥ १ ॥
कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ २ ॥

नृपतेः प्रतिषिद्धमेव तत् कृतवान् पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ३ ॥

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तः शल्य इवासीत् क्षितिपोऽपि ॥ ४ ॥

तेनावतीर्य तुरगात् प्रथितान्वयेन
पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-
रात्मानमक्षरपदैः कथयाम्बभूव ॥ ५ ॥

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्र-
मज्ञानतः स्वचरितं नृपतिः शशंस ॥ ६ ॥

तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः ।
सोऽभूत् परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥ ७ ॥

दिष्टान्तमाप्स्यति भवानपि पुत्रशोका-
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।
आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं
प्रोवाच कोसलपतिः प्रथमापराद्धः ॥ ८ ॥

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति ॥ ९ ॥

इत्थं गते गतघृणः किमयं विधत्तां
वध्यस्तवेत्यभिहितो वसुधाधिपेन ।
एधान् हुताशनवतः स मुनिर्ययाचे
पुत्रं परासुमनुगन्तुमनाः सदारः ॥ १० ॥

प्राप्तानुगः सपदि शासनमस्य राजा
सम्पाद्य पातकविलुप्तधृतिर्निवृत्तः ।
अन्तर्निविष्टपदमात्मविनाशहेतुं
शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः ॥ ११ ॥

[ रघुवंशे ]

---

**प्रश्नाः**—कुत्रागच्छद्दशरथः ? किं श्रुतं तेन तत्र ? को विद्धस्तेन शरेण ? किमकरोत् तदा दशरथः ? कुत्रानयत् स श्रावणम् ? किं कृतं श्रावणस्य पितृभ्याम् ? कथं श्रावणपितृभ्यां दत्तः शापोऽपि दशरथस्यानुग्रह एव समभवत् ?

**परीक्षणम्**—को भावो युष्माकं मनस्युत्पद्यते काव्यस्यास्य पठनेन । के श्लोका रम्यतमा दृश्यन्ते । कस्मात् कारणात् । चतुर्थे श्लोके किमर्थं वृत्तान्तरं प्रयुक्तम् । कस्तस्य परिणामः । कथं स राजापि शल्यविद्धो बभूव । षष्ठे श्लोके किमक्षरं बहुकृत्वः प्रयुक्तं भवति । नवमे श्लोके पुनः किमक्षरं बहुकृत्वः प्रयुक्तं भवति । केनोपमितः शापस्तत्र । एकादशे श्लोके पुनः केनोपमितः स दशरथः । कथमेषा पूर्णोपमा भवति ।

**काव्यरसाः**—प्रसिद्धा नवरसाः ।

१ शृङ्गाररसः—आस्यं सहास्यं नयनं सलासं सिन्दूरबिन्दूदयशोभि भालम् ।
नवा च वेणी हरिणीदृशश्चेदन्यैरगण्यैरपि भूषणैः किम् ॥ १ ॥

२ वीररसः--चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥ २ ॥

३ करुणरसः—पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ३ ॥

४ अद्भुतरसः—अम्बुजमम्बुनि जातं नहि दृष्टं जातमम्बुजादम्बु ।
अधुना तद्विपरीतं चरणाम्बुजतो विनिर्गता गङ्गा ॥ ४ ॥

५ हास्यरसः—सहस्रास्यो नागः प्रभुरपि मतः पञ्चवदनः
षडास्यो हन्तैकस्तनय इतरो वारणमुखः ।
सदा भैक्ष्यंशश्वत्प्रभवतु कथं वर्तनमिति
श्वसन्त्यां पार्वत्यामथ जयति शम्भुः स्मितमुखः ॥ ५ ॥

**काव्यवृत्तम्**—अस्मिन् काव्ये १, ३, ५–११ श्लोकानां वृत्तानि कथयत ।
द्वितीयश्लोकस्य वृत्तम्--स्वागता । ( स्वागता रनभगैर्गुरुणा च । )

| र | न | भ | गु गु |
|---|---|---|---|
| कुम्भपू | रणभ | वः पटु | रुच्चैः । |

चतुर्थश्लोकस्य वृत्तम्—मत्तमयूरः । ( वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरः । )

| म | त | य | स | ग |
|---|---|---|---|---|
| हा ताते | तिं क्रन्दि | तमाक | र्ण्य विष | ण्णः । |

# चतुर्दशः पाठः ।

## स्वभावो दुरतिक्रमः ।



कस्मिंश्चिद्वनोद्देशे सिंहदम्पती प्रतिवसतः स्म । अथ सिंही पुत्रद्वयमजीजनत् । सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति । अथ कदाचित्तेन किमपि नासादितम् । वने भ्रमतोऽपि तस्य रविरस्तङ्गतः । अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः । स च बालकोऽयमिति मत्वा यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमपि समर्पितवान् । ततः सिंह्याभिहितम् । भोः कान्त, आनीतं किञ्चिदस्माकं भोजनम् । सिंह आह । प्रिये, मयाद्यैनं शृगालशिशुं परित्यज्य न किञ्चित्सत्त्वमासादितम् । स च मया बालोऽयमिति मत्वा न व्यापादितः । उक्तं च—

स्त्रीलिङ्गिविप्रबालानां प्रहर्तव्यं न कर्हिचित् ।
प्राणत्यागेऽपि सञ्जाते विश्वस्तानां विशेषतः ॥ १ ॥

इदानीमेनं भक्षयित्वा पथ्यं कुरु । प्रभातेऽन्यदुपार्जयिष्यामि । साह । भोः कान्त, त्वया बालकोऽयमिति मत्वा न व्यापादितः । तदहं कथमेनं स्वोदरार्थे व्यापादयामि । उक्तं च—

अकृत्यं नैवं कृत्यं स्यात्प्राणत्यागेऽपि संस्थिते ।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः ॥ २ ॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति । इत्युक्त्वा तमपि स्वस्तनक्षीरेण पुष्टिमनयत् । एवं ते त्रयोऽपि शिशवः परस्पराज्ञातजातिविशेषा एकत्र विहारिणो बाल्यमतिवाहयन्ति । अथ कदाचित्तत्र वने

भ्राम्यन् वनगजो दृष्टः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्तावत्तेन शृगालसुतेनाभिहितम्। अहो, गजोऽयं युष्मत्कुलशत्रुः। तन्न गन्तव्यमेतस्याभिमुखम्। एवमुक्त्वा गृहं प्रधावितः। तावपि ज्येष्ठत्रासान्निरुत्साहतां गतौ। अथवा साध्विदमुच्यते।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात् ॥ ३ ॥
अत एव हि वाञ्छन्ति भूपा योधान् महाबलान्।
शूरान् धीरान् कृतोत्साहान् वर्जयन्ति च कातरान् ॥ ४ ॥

ततो द्वावपि पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुर्यथा गजं दृष्ट्वा दूरतोऽपि नष्टः। सोऽपि तदाकर्ण्य कोपाविष्टः प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखीं भ्रुकुटिं कृत्वा तौ निर्भर्त्सयन् परुषतरवचनान्युवाच। ततः सिंह्यैकान्ते नीत्वा प्रबोधितः। वत्स, मैवं कदाचिज्जल्प। भवदीयलघुभ्रातरावेतौ। अथासौ प्रभूतकोपाविष्टस्तामित्युवाच। किमहमेताभ्यां शौर्यरूपेण विद्याभ्यासेन वा न्यूनो येन मामुपहसतः। तन्मयावश्यमेतौ व्यापादनीयौ। तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती प्राह।

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ५ ॥

परं शृगालसुतस्त्वं कृपया मया स्वकीयक्षीरपानेन पुष्टिं नीतः। तद्यावन्नैतौ त्वां शृगालं जानीतस्तावद् द्रुतं गत्वा स्वजातिमध्ये भव। नो चेदाभ्यां हतो मृत्युपथं समेष्यसि। सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः क्षणात्प्रणष्टः।

[ पञ्चतन्त्रे ]

---

**प्रश्नाः**—किन्निमित्तं सिंहेन स शृगालशिशुर्न व्यापादितः ? केन भावेन सिंही तमपोषयत् ? गजमभिद्रवन्तौ तौ सिंहशिशू कस्मात्कारणान्निरुत्साहतां गतौ ? किमर्थं सिंही तं शृगालशिशुमेकान्ते प्राबोधयत् ? किं तात्पर्यमस्य पाठस्य ?

**आभाणकाः**—'अत एव हि वाञ्छन्ति भूपा योधान् महाबलान् ।
शूरान् धीरान् कृतोत्साहान् वर्जयन्ति च कातरान्' ॥

एतादृशाः ये केऽप्याभाणका अस्मिन् पाठे दृश्यन्ते तान् विचिनुत ।

**प्रयोजकानि क्रियापदानि—**

| ( शुद्धान्तवाक्यानि ) | ( प्रयोजकवाक्यानि ) |
|---|---|
| १ शिष्या वेदानधीयते । | गुरुः शिष्यान् वेदानध्यापयति । |
| २ आर्या वेदार्थमविदुः । | देवो वेदार्थमार्यानवेदयत् । |
| ३ जना धर्मं बोधन्ति । | आचार्या जनान् धर्मं बोधयन्ति । |
| ४ देवा अमृतमश्नन्ति । | भगवान् देवानमृतमाशयति । |
| ५ धेनुस्तृणमत्ति खादति वा । | गोपो धेन्वा तृणमादयति खादयति वा । |
| ६ भक्ता हरिं पश्यन्ति । | सद्गुरुर्भक्तान् हरिं दर्शयति । |
| ७ देवा गन्धर्वस्य गानं शृण्वन्ति । | गन्धर्वो देवान् गानं श्रावयति । |
| ८ अश्वा रथं वहन्ति नयन्ति वा । | सूतोऽश्वान् रथं वाहयति नाययति वा । |
| ९ चौरो धनं हरति । | दुष्टश्चौरेण चौरं वा धनं हारयति । |
| १० भृत्यः कटं करोति । | स्वामी भृत्येन भृत्यं वा कटं कारयति । |
| ११ देवैर्गन्धर्वस्य गानं श्रुतम् । | गन्धर्वेण देवा गानं श्राविताः । |

---

# पञ्चदशः पाठः ।

## स्यमन्तकप्राप्तिः ।



पुरा किल वृष्णिवंशे सत्राजिन्नाम कोऽपि राजा बभूव । स बहुकालं सूर्योपासनामनुतिष्ठंस्तस्य प्रसादेन स्यमन्तकं नाम तेजोगर्भं मणिं प्राप्नोत् । तस्य च माहात्म्यमेवमासीद्यद्यस्य सविधे स वर्तेत स पुरुषः प्रतिदिनं दशभारं सुवर्णं लभेत । तथा यत्र च स स्थितिं लभेत तत्रानावृष्टिरन्यो वा कोऽप्युपद्रवो न जायेतेति । तादृशं तं मणिं कण्ठे धारयन् सत्राजित् सहस्रांशुरिव व्यरोचत ।

यदुवंशप्रदीपः श्रीकृष्ण एवैनं मणिं धारयितुमर्हति नान्योऽतः समर्प्यतां स तस्मा इति जनैरभ्यर्थितः सत्राजित्तं तस्मै नायच्छत् । स्वभ्रात्रे च प्रसेनाय स तमुपहारीचकार । अथैकदा प्रसेनस्तं मणिं कण्ठे कृत्वा हयमारुह्य मृगयायै वनमगच्छत् । तत्र कोऽपि सिंहः प्रसेनं हत्वा तं स्यमन्तकमणिमपजहार । ततो मणिभासुरं केसरिणं हत्वा, ऋक्षराजो जाम्बवांस्तं मणिमगृह्णात् स्वगुहां च प्राविशत् । वनादनागतमात्मनो भ्रातरं वीक्ष्य सत्राजित् कृष्णेन मणिलोभात्स हत इति मिथः स्वजनेभ्योऽकथयत् । इयं च वार्ता कर्णोपकर्णिकया जनेषु प्रासरत् ।

अचिरेणैवायं वृत्तान्तो भगवतो वासुदेवस्य श्रुतिपथमगच्छत् । सत्राजित्कृतामात्मनो निन्दामसहमानः स तदलीकापवादप्रमार्जनाय प्रसेनमन्वेष्टुं प्रतस्थे । यस्मिन्वने मृगयार्थं प्रसेनो गतवांस्तद्वनमसौ वासुदेवः प्राप्तवान् । तस्मिन्नरण्ये प्रसेनाश्वस्य पदचिह्नान्यभिज्ञाय तान्यन्वसरत् ।

तदनुरोधाद्वनाद्वनमटन् स कञ्चित्प्रदेशं प्राप, यत्र केनापि मृगेन्द्रेण हतं साश्वं प्रसेनं ददर्श । ततः स सिंहपदलाञ्छितं पन्थानमनुसृत्य कञ्चन पर्वतप्रदेशमुपययौ । अनतिदूरे च तं मृगेन्द्रं व्यापादितमपश्यत् । केनासौ व्यापादितो भवेदिति चिन्तयन् भगवान् वासुदेवस्तत्र भल्लूकपदचिह्ना-न्यपश्यत् । तान्यनुसरन् स समीपस्थां घनान्धकारच्छन्नां काञ्चन गुहां प्राविशत् । ततः सुदूरं गत ऋक्षराजस्य जाम्बवतो गृहं व्यलोकयत्तत्र च प्रथमकक्षायां दोलास्थितस्य कस्यापि बालकस्य रोदनस्वरमश्रौषीत् । तद्रोदनशब्दानुसारेणाग्रे गच्छन् भगवान् कृष्णः—

'सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥

इति श्लोकेन कुमारं लालयन्तीं दोलां सञ्चालयन्तीं च धात्रीं तत्रापश्यत् । सा धात्री तमदृष्टपूर्वं पुरुषं दृष्ट्वा भयेन चुक्रोश । तच्छ्रुत्वा क्रुद्धो जाम्ब-वान् बहिरागत्य कस्त्वमिति भगवन्तं कृष्णमपृच्छत् । त्वयापहृतमेनमस्म-दीयं मणिं ग्रहीतुमत्रागतोऽस्मीति वासुदेवस्तं प्रत्यभाषत । स्वपराक्रमेणा-र्जितमिमं स्यमन्तकं न कदापि प्रदास्यामि । गम्यतां यथागतम् । नो चेद्धन्तव्योऽसि मयेति जाम्बवानगर्जत् । ततस्तयोर्युध्यमानयोर्बहुकालो व्यतीतः ।

तदानीं रमणीललामभूता देवी रुक्मिणी, देवकी, वसुदेवो, बल-भद्रोऽन्ये सुहृदश्च कृष्णस्य वार्तामश्रुत्वा भृशं शोकार्ताः सत्राजित-मशपन् । भगवान् कृष्णस्तु जाम्बवता सहाह्नामष्टविंशतिं नियुद्धं चकार । अन्ते परिश्रान्तः स ऋक्षराजो भूमावपतत् । तद्वक्षस्युपविश्य कृष्णस्तं मुष्टिना प्राहरत् । तदा केनाप्यपराजितः स जाम्बवांस्तस्मिन् बाहुयुद्धे इत्थं क्षीणक्षीणः स्विन्नगात्रो लुप्तसामर्थ्यश्चाभवद्यत् स स्वाराध्यं श्रीराम-

चन्द्रं भक्तिप्रवणेन चेतसा दध्यौ। भो रक्षःकुलनिषूदन, भक्तजनरक्षक, स्वामिन् रामचन्द्र! अद्याहं केनाप्यपूर्वेण पुरुषविशेषेण पराजितो म्रिये। इदानीं मोपेक्षस्व। मां पाहि। न किमप्यन्यन्मे शरणम्। इति प्रार्थनापरोऽसौ यावत् स्थितस्तावद्भगवान् कृष्णो रामरूपेण तस्य दृग्विषयोऽभवत्। तेन नितान्तं विस्मितो जाम्बवान् स्ववक्षःस्थितं भगवन्तमित्थं प्रार्थयामास। त्वं पुराणपुरुषो विष्णुरसि। त्वमेव पूर्वं रामावतारे रावणमवधीः। त्वमेव चास्य चराचरस्य विश्वस्य स्रष्टा। अज्ञानेन तवस्वरूपमजानता मया कृतमपराधं क्षमस्वेति। तेन परितुष्टो वीरवरो वासुदेवस्तममुञ्चत्। ततो जाम्बवान् भक्तिप्रवणेन चेतसा तं महापुरुषं विविधोपचारैः सम्पूज्य स्वदुहितरं जाम्बवतीं स्यमन्तकं च तस्मायर्पयामास।

ततो भगवान् कृष्णः स्यमन्तकमणिं कण्ठे धारयन्नवोढया जाम्बवत्या सह द्वारकां प्रत्यागच्छत्। तं दृष्ट्वा वसुदेवाद्याः सर्वे नितान्तं प्रमुदिता बभूवुः। अनन्तरं भगवान् कृष्णः सभायां सत्राजितं समाहूय बान्धवानां सन्निधौ मणेर्वृत्तान्तमकथयत्। तं स्यमन्तकं च तस्मै प्रायच्छत्। तेनातीव व्रीडाभिभूतः सत्राजिदचिन्तयत्। अहो भगवन्तं निन्दता मया न सम्यगनुष्ठितम्। किमिदानीं विधेयम्। कथं भगवान् वासुदेवो मय्यकलुषितः सन् मामनुगृह्णीयात्। इति मुहुर्मुहुर्विचिन्त्य स्त्रीरत्नभूतामात्मनः कन्यकां सत्यभामां तस्मै समर्पयामास। तदा स्यमन्तकमणिं च तस्मै वराय यौतकत्वेन प्रायच्छत्। भगवानपि तेन सन्तुष्टस्तां यथाविधि पर्यणैषीत्।

---

**प्रश्नाः**—कथं प्राप्तवान् सत्राजित् स्यमन्तकमणिम्? को गुणस्तस्य मणेः? प्रसेनात्केनापहृतः स मणिः? पश्चात्कस्य हस्ते पतितः स स्यमन्तकः? किमर्थं

श्रीकृष्णः प्रसेनमन्वेष्टुं प्रचलितः ? कथं स समागतो भल्लूकगुहाम् ? कियन्तं कालं युद्धमभवत्तयोः ? किमर्थं स ऋक्षराजः स्वाराध्यदैवतं रघुनाथं प्रार्थितवान् ? अन्ते कथं सत्राजित् श्रीकृष्णं प्रीणयामास ?

**वर्णनम्**—श्रीकृष्णजाम्ववतोर्युद्धं वर्ण्यताम् ।

**स्वभाववर्णनम्**—कीदृशः स्वभावः सत्राजितः कृष्णस्य चेत्युदाहरणैः प्रदर्श्यताम् ।

**आलेखनम्**—येन क्रमेण श्रीकृष्णो भल्लूकराजस्य गुहां प्रति प्राप्तस्तत्स्पष्टमालिख्यताम् ।

---

# षोडशः पाठः ।

## हिमालयवर्णनम् ।



अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥
यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥
अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥
यश्चाप्सरोविभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥ ४ ॥
आमेखलं सञ्चरतां घनानां छायामधः सानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५ ॥

पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विन्दन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ६ ॥
न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरबालकानामालेखलेखक्रिययोपयोगम् ॥ ७ ॥
यः पूरयन् कीचकरन्ध्रभागान् दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥
कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥ ९ ॥
दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव ॥ १० ॥
लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥ ११ ॥
भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ १२ ॥
सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १३ ॥

[ कुमारसम्भवे ]

---

**प्रश्नाः**—तयोः पूर्वापरयोः सागरयोः के नामनी ? कस्य मानदण्डो विद्यते ? किं वर्तते हिमाचलस्य पृष्ठदेशे ? के पशवो वसन्ति तत्र ? का मानवजातयो विहरन्ति तत्र ? किं लभ्यतेऽस्य गिरेरुदरात् ? क उपयोगो भारतीयानां हिमाचलस्य ?

**परीक्षणम्**—द्वितीये श्लोके का नामोपमा कल्पिता हिमाचलस्य । कथं पूर्णोपमा यथार्था च भवति सा। अष्टमे श्लोके किं सामान्यदृश्यं वर्णितं कविना।

अपि यथार्थैषा कविकल्पना । अत्र विशेषपदानामौचित्यं दर्शयत । एकादशे श्लोके केनोपमितो हिमाचलः । केन कारणेन गिरिराजशब्दोऽर्थयुक्तो भवति । अपि विशेषणान्युचितानि । केषु श्लोकेषु स्वभावोक्तयो दृश्यन्ते । तेषां माधुर्यं कैः पदैर्वर्धितं भवति ।

**समासाः**—अनन्तरत्नप्रभवः । आमेखलम् । तुषारस्रुतिधौतरक्तम् । दरीमुखोत्थः । चन्द्रमरीचिगौरैः । भिन्नशिखण्डिबर्हैः ।

**अर्थसम्बन्धः**—१ एको हि दोषो गुणसन्निपाते निमज्जति । क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव ।—( एतयोराभाणकयोरन्यान्युदाहरणानि प्रदर्शयत । )

**काव्यवृत्तम्**—अस्मिन् काव्ये सर्वत्रोपजातिवृत्तम् । उपजातिवृत्ते केचित् पादा इन्द्रवज्रावृत्तस्थाः केचिच्चोपेन्द्रवज्रावृत्तस्था भवन्ति । यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| त | त | ज | ग ग | ज | त | ज | ग ग । |
| अस्त्युत्त | रस्यां दि | शि देव | तात्मा | हिमाल | यो नाम | नगाधि | राजः । |
| त | त | ज | ग ग | ज | त | ज | ग ग । |
| पूर्वाप | रौ तोय | निधी व | गाह्य | स्थितः पृ | थिव्या इ | व मान | दण्डः ॥ |

**काव्यरसाः**—

६ भयानकरसः—दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्तभिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ६ ॥

७ बीभत्सरसः—रक्तं नक्तंचरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः ।
क्रीडत्यक्रीडमस्मिन् रुधिरमदवशात्पूतना नूतनाङ्गी
योगिन्यो मांसमेदःप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥ ७ ॥

८ रौद्ररसः—पातालतः किमु सुधारसमानयामि
निष्पीड्य चन्द्रममृतं किमु वा हरामि ।
उद्यन्तमद्य तपनं किमु वारयामि
कीनाशपाशमथवा किमु चूर्णयामि ॥ ८ ॥

९ शान्तरसः—धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी
सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजन-
मेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ ९ ॥

---

# सप्तदशः पाठः ।

## दधीचिकथा ।



युगान्ते चलते मेरुः कल्पान्ते सप्त सागराः ।
साधवः प्रतिपन्नार्था न चलन्ति कदाचन ॥ १ ॥

पुरा किल दधीचिरिति महातपास्तापस आसीत् । निजकलत्रमात्र-निर्वृतोऽपरोऽगस्तिरिव भगवान् दधीचिर्गृहधर्मपरायणस्तयैव भार्यया सहारण्यमधिवसन्विविधं तपस्तेपे । निखिलं जगदुपप्लावयितुं बद्धपरिकरा अपि दानवास्तपःप्रभावपरिपालितं तस्याश्रमपदमाक्रमितुं न प्रबभूवुः । अथ गच्छता कालेन शक्रप्रमुखा देवाः सर्वेऽपि तस्याश्रमपदं प्राप्य सादरं कृतनतयो मुनिना ग्राहितातिथ्याः कुशलमनुयुक्ताश्च प्रोचुः ।

मुनीन्द्र, कुशलं नः । फलितप्रायश्चास्माकं मनोरथद्रुमो यदसि सन्दृष्टः । भवता हि परिगृहीतानां न किञ्चिदपि दुर्लभं भुवने । किमपि कार्यान्तरमभिधातुं मुखरयतीवायमस्मान्स्नेहः । तच्चावधार्यताम् । भगवन्नशेषानपि दानवान्नामशेषान्विधाय भवत्पादमूलमुपायाताः स्मः । साम्प्रतं च शत्रुविरहिणां नोऽस्त्राणि यदि पुनः स्वर्ग एवैतानि स्थाप्येरं-

स्तदानेकविधं यत्नमास्थायोपहरेयुरेतानि पराभवमसहमाना दैत्याः । तदेतानि भवदाश्रम एवार्हाणि स्थापयितुम् । अत एतान्यात्मीयतां नीत्वाऽनुजानीह्यस्मान्नन्दनवनविहाराय । तपःप्रभावाद्दानवदुष्प्रवेशे ह्यस्मिन् प्रदेशे नैतेषामपहारस्य शङ्काया अप्यवसर इति ।

मुनिरपि तत्सादरमङ्गीचकार । गभस्तिनी तु तदखिलमाकर्ण्य भर्तारं प्राह । नाथ, किमनेन देवकार्येणास्माकम् । परमार्थैकनिष्ठानामपेत-संसारानुरागाणां हि लोकद्वयविरुद्धमेतदाचरणम् । किञ्च, यदि जानीयु-रत्र निहितान्यायुधानि महाप्रयासा दैत्यास्तदा महीयसा प्रयत्नेनाप्या-हरेयुः । ततश्च निक्षेपविनाशक्रुद्धा अमी एव देवाः शत्रवः सम्पद्येर-न्नस्माकम् । अत एव परित्यजन्त्यापातरमणीयं दुःखविपाकिनं पन्थानमेनं सन्तः । तदलमेतेन व्यवसायेनेति ।

पूर्वमेव प्रतिपन्नार्थस्तु दधीचिर्निशम्येदं भार्याया वचनं प्रत्यब्रवीत् । प्रेयसि, अवितथं खल्वेतत्सर्वम् । किन्तु न शक्नोमि परावर्तयितुं सकृदपि समुद्गतां वाचम् । सा तु तदाकर्ण्य देवमेव शरणं मन्वाना तूष्णीं बभूव । देवा अपि प्रणष्टभीतयस्तापसाभ्यनुज्ञाताः सानन्दं दिवमगच्छन् । तेषु गतेषु दधीचिरपि कियन्तं कालं भार्यया सह सुखमुवास । अथ दैत्या दधीचिं पीडयितुं प्रावर्तन्त । देवास्तु व्यतीतेऽपि वर्षाणां सहस्रे नात्मन आयुधविषयिणीं निनीषां प्रदर्शयामासुः । प्रतिदिनं पुनरधिका-धिकं ववृधे राक्षसत्रासः । ततः पर्याकुलमतिर्दधीचिर्भार्यामाह स्म । प्रेयसि, आयुधान्यत्र संस्थाप्य निर्विशङ्कं दिवं प्रस्थिता देवा नाद्यापि प्रतिनिवर्तन्ते । प्रतिदिवसं च समेधत उपप्लवो दैत्यानाम् । तदशक्यान्यतः-परमायुधानि संरक्षितुम् । ब्रूहि किमत्र करवाणीति । सा तु सर्वार्थविद्भवानेवात्र प्रमाणमिति प्रत्यब्रूत । ततो बलोत्करेभ्यो दानवेभ्य

आयुधानि परिरक्षितुमीहमानो दधीचिः पुण्यैर्जलैस्तानि प्रक्षाल्य जलमयत्वं नीत्वा च प्राश्नात् ।

एवंभूते च देवा दधीचिमुपेत्य प्राहुः । मुने, उपस्थिताऽस्माकं महाभीतिस्तत्प्रत्यर्प्यन्तामस्त्राणीति । ततो दधीचिः प्राह स्म । महाभागाः, अत्रावस्थाप्यायुधानि दिवं प्रविष्टेषु युष्मासु निकामं प्रववृधे राक्षसत्रासः । ततो भीतश्चाहं भवतः प्रतिपालयंश्चिरायाप्यनागतेषु श्रीमत्सु तान्यायुधानि जलमयतां प्रापय्यापिबम् । साम्प्रतं च तानि मदीये शरीरेऽस्थिभावतामापन्नानि । तदुच्यतां यदत्र साम्प्रतमिति । ततो देवा अभाषन्त । मुनीन्द्र, कृतं परिहासेन । देहि नोऽस्त्राणि । बलवत्किल प्रपीड्यामहे रिपुभिः । कथं वा तानि विना सुखं निवत्स्यामः । कुत्र वा गमिष्यामः । कथं च जीवितं धारयिष्यामः । तद्विधीयतां करुणा समर्प्यन्तां चास्त्राणीति । ततो मुनिर्जगाद । महाभागाः, न किल भवज्जीवितादप्यधिको मे देहः । तद्योगयुक्तस्य तनुं त्यजतो ममास्थिभिर्निर्वाह्यतामस्त्रकार्यमिति । देवेषु च तथेति तद्वचनमङ्गीकृतवत्सु जलमानेतुं च प्रयातायां सहधर्मिण्यां महासत्त्वो दधीचिर्बद्धपद्मासन आत्मनो जीवं परमात्मसाच्चक्रे । ततो दधीचिं व्यपेतप्राणमवलोक्य देवास्त्वष्टारं समादिदिशुः । आदाय मुनेरस्थीनि निर्मीयन्तां दिव्यास्त्राणीति । ततो देवा अपि कृतायुधाः स्वर्गं प्रययुः ।

अथ नद्याः प्रतिनिवृत्ता गभस्तिनी प्रविश्याश्रमे भर्तारमनवलोकमाना नितरां विषसाद । उद्भ्रान्तेव च हा नाथ क्वासीति विलपन्तीतस्ततो बभ्राम । तत आश्रमवर्तिनं भगवन्तं हुताशनमुपेत्य क्व मे जीवितेश्वर इत्यप्राक्षीत् । सोऽपि यथावृत्तं वृत्तं निजगाद । तदाकर्णयन्त्येव च मूर्च्छिता धरातले न्यपतत् । ततो लब्धसंज्ञा च

सोरस्ताडमुच्चैः क्रोशन्ती भर्तुर्नखलोमादीन्यादाय च विरचय्य च महीयसीं चितां प्रणम्य चानलं प्रविदार्य चात्मनः कोष्ठं तत्र संस्थितं तनयं च पाणावादाय साञ्जलिबन्धं प्रार्थयामास ।

पित्रा हीनो बन्धुभिर्गोत्रजैश्च मात्रा हीनो बालकोऽच्छिन्ननालः ।
ओषध्योऽमुं भूतसङ्घैः समेताः सर्वे पान्तु प्रेमतो लोकपालाः ॥ २ ॥

अयं च चरमो वः प्रणाम इति वदन्त्येव ज्वालामालाजटिलं जातवेदसं प्राविशत् । अहो सत्यवादिता साधूनाम् । अवितथं खल्वेतद्वचनम् । यथा—

विदुषां वचनाद्वाचः सहसा यान्ति नो बहिः ।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ ३ ॥

[ संस्कृतचन्द्रिकायाम् ]

---

**प्रश्नाः**—कुत्रावसद्दधीचिः ? के प्राप्तास्तस्याश्रमपदम् ? किं कार्यमासीत्तेषाम् ? किमर्थं पत्याङ्गीकृतमस्त्ररक्षणं गभस्तिनी नान्वमन्यत ? दानवेभ्योऽस्त्राणि रक्षितुं का युक्तिर्योजिता दधीचिना ? देवैरस्त्राणि याचितो दधीचिस्तेभ्यः किं प्रददौ ? गभस्तिन्यै केन कथितो दधीचेर्निधनवृत्तान्तः ? तदा सा किमकरोत् ?

**स्वभाववर्णनम्**—दधीचिमुनेस्तस्य भार्याया गभस्तिन्याश्च स्वभावं विस्तरेण वर्णयत ।

**विशदीकरणम्**— ( १ ) फलितप्रायश्चास्माकं मनोरथद्रुमो यदसि सन्दृष्टः। ( २ ) तपःप्रभावाद् दानवदुष्प्रवेशे ह्यत्र प्रदेशे नैतेषामपहारस्य शङ्काया अप्यवसरः। ( ३ ) निक्षेपविनाशक्रुद्धा अमी एव देवाः शत्रवः समपद्येरन्नस्माकम् । ( ४ ) योगयुक्तस्य मे तनुं त्यजतो ममास्थिभिर्निर्वाह्यतामस्त्रकार्यम् ।

[ योगयुक्तो नाम योगी–तापसः । अस्त्रकार्यं निर्वाह्यताम् नाम अस्त्राणि निर्मीयन्ताम् तैश्च स्वकार्यं साध्यताम् । तनुः–देहः । देवान् प्रति दधीचिमुनिरित्थं वदति—योगसामर्थ्येन स्वदेहमहं त्यक्ष्यामि । तस्मान्मे शवादस्थीनि गृह्णीत तेभ्यश्चास्त्राणि निर्मिमीध्वम् । इति ]

( इत्थमितरेषां वाक्यानामर्थो विशदीक्रियताम् । )

---

# अष्टादशः पाठः ।

## शकुन्तलायाः प्रस्थानमङ्गलम् ।



**प्रियंवदा**—( कर्णं दत्वा । ) अनसूये, त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषय आकर्ण्यन्ते ।

( प्रविश्य समालम्भनहस्ता )

**अनसूया**—सखि, एहि ! गच्छावः ।

( इति परिक्रामतः । )

**प्रियंवदा**—( विलोक्य । ) एषा सूर्योदय एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एताम् ।

( इत्युपसर्पतः । )

( ततः प्रविशति यथोद्दिष्टव्यापारासनस्था शकुन्तला । )

**तापसीनामन्यतमा**—( शकुन्तलां प्रति । ) जाते, भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व ।

**द्वितीया**—वत्से, वीरप्रसविनी भव ।

**तृतीया**—वत्से, भर्तुर्बहुमता भव ।

( इत्याशिषो दत्वा गौतमीवर्जं निष्क्रान्ताः । )

**सख्यौ**—( उपसृत्य । ) सखि, सुखमज्जनं ते भवतु ।

**शकुन्तला**—स्वागतं मे सख्योः । इतो निषीदतम् ।

**उभे**—( मङ्गलपात्राण्यादाय । उपविश्य । ) हला, सज्जा भव । यावन्मङ्गलसमालम्भनं विरचयावः ।

**शकुन्तला**—इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति । ( इति बाष्पं विसृजति । )

**उभे**—सखि, उचितं न ते मङ्गलकाले रोदितुम् ।

( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । )

**प्रियंवदा**—आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।

( प्रविश्योपायनहस्तौ )

**ऋषिकुमारकौ**—इदमलङ्करणम् । अलंक्रियतामत्रभवती ।

( सर्वा विलोक्य विस्मिताः । )

**गौतमी**—वत्स नारद, कुत एतत् ?

**प्रथमः**—तातकाश्यपप्रभावात् ।

**गौतमी**—किं मानसी सिद्धिः ?

**द्वितीयः**—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीम्—

क्षौमं केनचिदिन्दुपाण्डुतरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ १ ॥

**प्रियंवदा**—( शकुन्तलां विलोक्य । ) हला, अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति ।

( शकुन्तला व्रीडां रूपयति । )

**प्रथमः**—गौतम, एह्येहि । अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः**—तथा ।

( इति निष्क्रान्तौ । )

**सख्यौ**—अये, अनुपयुक्तभूषणोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः ।

**शकुन्तला**—जाने वां नैपुणम् ।

( उभे नाट्येनालंकुरुतः )

[ शाकुन्तले ]

---

**प्रश्नाः**—काः शकुन्तलामभिनन्दन्ति, कथं च ? किमन्तरं तापस्याशीर्वचनस्य सख्याशीर्वचनस्य च ? किमर्थं बाष्पं व्यसृजच्छकुन्तला ? कीदृशान्यलङ्करणान्युपहृतानि कुमाराभ्याम् ? कस्मात् प्राप्तानि तानि ? किं सूचितं तेन ?

**विशदीकरणम्**—( १ ) एषा सूर्योदय एव शिखामज्जिता शकुन्तला । ( २ ) सखि, सुखमज्जनं ते भवतु । ( ३ ) आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते । ( ४ ) अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति ।

**समासाः**—प्रतिष्ठितनीवारहस्ताभिः । गौतमीवर्जम् । उपायनहस्तौ । तत्किसलयोद्भेदप्रतिद्वन्द्विभिः । ( एतेषां विग्रहान् कृत्वा नामानि कथयत । )

**वृत्तम्**—'क्षौमं केनचित्०' इत्यस्य श्लोकस्य वृत्तं गणविभाजनेन लक्षणेन च सहितं कथयत ।

---

# नवदशः पाठः ।

## वङ्कुऋषेराश्रमवर्णनम् ।



सम्प्राप पृथिवीपालः कालेन कियताप्यथ ।
स कूलोपान्तविचरन्न्यङ्कु वङ्कुतपोवनम् ॥ १ ॥
हृतं कुतूहलेनालं तदालोकनजन्मना ।
पतिं मध्यमलोकस्य तं जगाद रमाङ्गदः ॥ २ ॥
सीमा सतीति शब्दस्य सकुशाङ्कालपपल्लवा ।
मैथिलीव श्रियं धत्ते कामप्याश्रमभूरियम् ॥ ३ ॥
इतो वान्ति हविर्धूमलतालास्यप्रदा इमे ।
मरुतः पावनाः पक्वपुरोडाशसुगन्धयः ॥ ४ ॥
इतो हिरण्मयी भूमिस्तरवो हेमवल्कलाः ।
उन्निद्रहेमपद्मानि पयांसीव पदे पदे ॥ ५ ॥
काकपक्षाङ्कमूर्धानः पश्यैते गुरुशिक्षया ।
बटवः खण्डयन्त्यत्र समिधश्च पदानि च ॥ ६ ॥
अनया सामगायन्त्या स्वरसंशयवानयम् ।
इतः करोति कलहं शुकः सारिकया समम् ॥ ७ ॥
इदमत्राद्भुतं पश्य मदक्लिन्नां गजस्य यत् ।
गण्डलेखां नखाग्रेण शनैः कण्डूयते हरिः ॥ ८ ॥
प्रभामण्डलपर्यस्ततमसः शतशः पथि ।
तवापतन्ति पातालरवयोऽमी महर्षयः ॥ ९ ॥

एषां द्वितयमेताभिः कपिलाभिरलङ्कृतम् ।
उटजप्राङ्गणं गोभिर्जटाभिरभितः शिरः ॥ १० ॥
इतो गात्रपरावृत्तिभग्नास्थिपरुषेतरान् ।
मुनेः शय्याकुशानत्ति बालः कस्तूरिकामृगः ॥ ११ ॥
इतोऽप्ययमृषिः पश्य जपापाटलयानया ।
गवानुगम्यते सायं सन्ध्ययेव दिवाकरः ॥ १२ ॥
सहसैवातिथिः प्राप्तः कोऽप्ययं भवतादिति ।
एष प्रत्युटजं वक्ति ससम्भ्रममयं शुकः ॥ १३ ॥
अतः सम्प्रति वीक्षन्ते कौतुकोत्तानितेक्षणाः ।
त्वामिन्दुमिव पर्याप्तमण्डलं मुनिकन्यकाः ॥ १४ ॥
तस्मिन्नित्युक्तवत्येव तथा सविधवर्त्मनि ।
ततः पृथ्वीशशाङ्केन वङ्कुर्मुनिरदृश्यत ॥ १५ ॥

[ नवसाहसाङ्कचरिते ]

---

**परीक्षणम्**—कः प्रधानो रसोऽस्मिन् काव्ये । के श्लोका रम्यतमा दृश्यन्ते । किमर्थम् । अस्मिन् काव्ये उपमास्थलानि विचिनुत । तृतीये, पञ्चमे च श्लोके कान्यक्षराणि बहुकृत्वः प्रयुक्तानि । षष्ठश्लोकस्याभिप्रायो विस्तरेणोच्यताम् । किं सूचितं कविनाष्टमे सप्तमे च श्लोके । नवमे श्लोके कैरुपमिता महर्षयः । चतुर्दशे श्लोके केनोपमितः स राजा ।

**काव्यवृत्तम्**--काव्यस्यास्य वृत्तं सलक्षणं सोदाहरणं च कथयत ।

**रसाः**--विष्णोरागमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं
कौपीनं परिधाय चर्म करिणः शम्भौ पुरो धावति ।
दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद्भूतले
कृत्तिर्विस्खलिता ह्रियानतमुखो नग्नो हरो राजते ॥ १ ॥

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एषः ॥ २ ॥

ततः परामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥ ३ ॥
( एतेषु श्लोकेषु के रसाः स्फुटं दृश्यन्ते । )

---

# विंशः पाठः ।

## राजकुमारः कमलानन्दः । ( प्रथमभागः )

—०—

अस्ति रत्नवत्यां नाम नगर्यां वीरवर्मा नाम भूपालः । दुर्निवारभुजप्रतापनिर्जितारातेस्तस्य ललनाजनमण्डनायमाना विलासवती नाम रमणी बभूव । अनयोश्च दम्पत्योरनपत्यतया दूयमानयोरतिक्रान्तप्राये यौवने दैववशात्तनयो जज्ञे । सम्मदविकसिताननो वीरवर्मा कुमारस्यास्य कमलानन्द इति नाम चकार । पञ्चषमासदेशीये च कुमारे दुर्भाग्यवशाद्राजा च राजमहिषी च युगपदेव केनापि दुर्निवारेणामयेनाक्रान्तौ धन्वन्तरिप्रतिमैर्भिषग्वरैश्चिकित्सितामयावपि कालवशमुपजग्मतुः ।

गच्छता कालेन नियन्तुरभावात्सर्वेऽपि सचिवादयः स्वस्वविषये स्वातन्त्र्यमवललम्बिरे । अस्वामिकमिव चाभूदशेषं राष्ट्रम् । सर्वोऽपि स्वस्यैव प्रभुत्वमवस्थापयितुं प्रायतत । एवं गते कीटकोत्कीर्णनिःसारवंशवदनायासोध्वंसनीयमिव तद्राष्ट्रं समभूत् । अवसरे चास्मिन् प्रबलतमा

रन्ध्रान्वेषिणो रिपवः सपद्यभिपत्य महीयसा सैन्येन रत्नवतीं परिरुरुधुः । अशेषं च राष्ट्रमात्मसाच्चक्रुः । आसीच्चैषां मनोरथो रत्नवतीमवस्कन्द्य राजकुमारं च निहत्य निष्कण्टकमेवानुशासनीयमशेषं धरातलमिति । किन्तु दैववशात्तदानीमेवायं राजकुमारो मातृनिर्विशेषया स्नेहैकरसया धात्र्या सुनिगूढमपवाहित इति सर्वेऽपि ते रिपवो विफलमनोरथा एवासन् । व्यतिकरे चास्मिन् राजकुलस्य भद्रं कामयमाना अपि काल-वशाद्दुर्बलप्रायतामापन्नाः केऽपि कुलामात्याः परित्यज्य रत्नवतीं सह्य-वनमध्यमधितष्ठुः ।

धात्री तु कुमारमादाय प्रस्थिता । एकाकिनी सा विविधकण्टकलता-कीर्णेषु निबिडारण्यप्रदेशेषु सञ्चरन्ती गगनमध्यमारूढे भगवति दिनकरे देवदर्शितमिव किमपि प्रफुल्लकमलमनोहरं रमणीयसलिलं च सरः प्रेक्ष्य प्रमुदिता स्नानादिनिर्वर्तनाय तस्य तीरमुपजगाम । प्रच्छायशीतलस्य च कस्यापि नातिदूरवर्तिनो मधुकरगुञ्जितमनोहरस्य विकसितस्याशोकतरोस्तले स्वीयमुत्तरीयमास्तीर्य तस्मिन् राजकुमारं शाय-यित्वा तस्यैव वाससोऽञ्चलेन तं प्रावृत्य च स्नातुं सलिलेऽवततार । अथासौ यावत्तत्र सरस्यवतीर्णा जलमवगाहते तावदेवैनामुपससार मूर्त इव मृत्युः कोऽपि ग्राहः । तेन च बलीयसा गृहीतचरणेय-माक्रोशन्त्यशरणा हा हतास्मीति क्रन्दन्ती च तदात्व एव व्यहीयत प्राणैः । अहो दुर्निवारित्वं भवितव्यतायाः । यद्राजकुमारोऽपि श्रीमान् कमलानन्दः समयेऽस्मिंस्तत्तादृशक्रूरसत्त्वव्याकुले प्रदेश एकाकी चाशरणश्च सम्पन्नः ।

अथ विहायसमध्यादीषदवगलति प्रचण्डकरे केऽपि पुलिन्दा अनु-भूयाखेटविहारं परिश्रान्तास्तृषाकुलाः सरस्तीरमुपतस्थुः । आसीच्चास्य

महीयसः शबरसैन्यस्य नायको विकटकूजितो नाम । एष चाशेषैरपि किरातैरनुदिनं सविनयमभ्यर्च्यमानो भूपाल इवातिविशालवैभवो विन्ध्य-वनप्रदेशे निवसति स्म । अतिक्रान्तेऽपि यौवने नासीदपत्यमेतस्य । ततश्चाकुलाकुल एवायं समभूत् ।

अथ समुपस्थिते सरस्तीरं शबरबले महीपतिकुमारः कमलानन्दः प्रबुद्धो रोदितुमारेभे । रुदितं चैतदनतिदूरवर्तिनः शबरसेनापतेः श्रवणपथमुपागच्छत् । स च समाकर्ण्य तदेवंविधे निर्मानुषसञ्चारे व्याकुलप्राये प्रदेशे कुतो नामेदं शिशुक्रन्दितमिति विचारयन् विस्मय-स्तिमितान्तःकरणः सहानुचरैरशोकमूलमुपससर्प । उपसृतश्च बाल-भानुमिव हृदयङ्गमकान्तिसमुज्ज्वलं विलोक्य कमलानन्दं प्रीतिविस्फारिते-क्षणो नूनं मदीयार्चनप्रसन्नया भगवत्या विन्ध्यवनदेवतयैवायमर्पित इति मन्यमानः कुमारस्य कान्त्यतिशयेन च सौन्दर्येण च विस्मयमानस्तं कराभ्यां सस्नेहमादाय सुनिपुणं मुहुर्मुहुर्निरीक्ष्य परिचुम्ब्य च कोमल-पल्लवैः शयनं परिकल्प्यानुचरपरिरक्षितं च तं तत्रावस्थाप्य महता प्रमोदेन बालमिममादायात्मनः सदनं प्रातिष्ठत। जनयति हि निसर्ग-निष्ठुराणामपि मनसि वात्सल्यमनपत्यता । अथायं कुमारमिमं भार्यायै समर्प्य दैवप्रदत्तोऽयं भद्रे संरक्ष्यतां तनय इत्यादिदेश। दैवदत्त इत्येव च चकार नामैतस्य ।

[ संस्कृतचन्द्रिकायाम् ]

---

**प्रश्नाः**—केन कारणेन तद्राष्ट्रमस्वामिकमभवत् ? कैः परिरुद्धा रत्नवती नगरी ? कया, कथं च रक्षितः कमलानन्दः ? किमभवत् तस्याः सरसि ? केन श्रुतं कमलानन्दस्य रुदितम् ? किमकरोत् स तदा ? अनन्तरं कुत्र नीतः कमलानन्दः ?

५

**परीक्षणम्**—१ के प्रसङ्गाः कमलानन्दस्य भाग्यं दुर्भाग्यं च दर्शयन्ति। २ निधनमुपगते राज्ञि सचिवैः किं कर्तव्यम्। ३ शबराणां दिनचर्या वर्णयत।

**द्वितीयायाः प्रयोगविशेषाः**—

१ सीतामामनन्ति प्रकृतिं रामं च पुरुषम्।

२ भारतीया राजानं विष्णोरंशं पितरं च जानन्ति।

३ अवेहि तनयां ब्रह्मन् अग्निगर्भां शमीमिव।

४ यमुनातटं गोपबालाः गताः–याताः–अवतीर्णाः वा।

५ नरपतिहितकर्ता द्वेष्यतां याति लोके।

६ तृप्तिं—स्मृतिं—प्रसिद्धिं प्राप्ताः जनाः।

७ जनाः प्रभुचित्तमनुवर्तन्ते। गिरिशिखरमारोहन्ति बालाः। ऋक्षः पथिकावभ्यपतत्, अभ्यद्रवत् वा। आहतः कन्दुक आकाशमुत्पतति। ऋषीणां वाचमर्थोऽनुधावति।

८ कृष्णः शिलापट्टमधितिष्ठति—अध्यास्ते—अधिशेते। कुलामात्याः सह्यवनमधितष्ठुः।

९ हरिर्वैकुण्ठम् उप—अधि—अनु—आ—वसति।

१० कृष्णम् अभितः—परितः—सर्वतः—उभयतः गोपास्तिष्ठन्ति।

११ मृत्युलोकम् उपर्युपरि हरिः। मृत्युलोकम् अधोऽधो वाली। सीताया दिव्यतां प्रति न रामस्य संशयः।

१२ धिक् भीरुत्वम्—दरिद्रताम्। धिक् तान् जाल्मान्। [ धिक् मूढ—धिक् इयं भीरुता—एतावपि प्रयोगौ प्रचलितौ ]

१३ लङ्कां समया— निकषा—अभि— उप— अनु—अति वानराः प्राप्ताः।

१४ कृष्णाभक्तम् हा। हा रावणपक्षपातिनः। [ हा देवि सीते।—एषोऽपि प्रयोगो दृश्यते क्वचित् ]

१५ भीमम् अन्तरेण (विना) न कोऽपि शक्तो दुर्योधनं हन्तुम्। लवम् अन्तरेण महानुरागो रामस्य मनसि समुत्पन्नः।

१६ पञ्च वर्षाणि नावर्षत् इन्द्रः।

१७ क्रोशम् आयता सा नगरी।

१८ दश योजनानि स ग्राम इतः।

---

# एकविंशः पाठः ।

## राजकुमारः कमलानन्दः । ( द्वितीयभागः )



अथ कियताचन कालेनातिक्रान्तशैशवः कमलानन्दः सह पुलिन्द-कुमारैः क्रीडंस्तत्तासु तेषां क्रीडासु पाटवमधिजगाम । विकटकूजितस्तु सेनापतिः कुमारमिमं स्वकुलोचितविद्याध्यापनार्थं कांश्चिद्धनुर्विद्यानिष्णातान् किरातवीरानाज्ञापयामास । तैश्च कमलानन्दस्याकृत्यैव प्रसन्नान्तरै-रध्यापितः सङ्ग्रामकलायामद्वितीयतामापेदे ।

अथैकदा कुमारः कमलानन्दः सह वयस्यगणैर्गृहीतविविधमृगयोप-करणो विन्ध्याटवीमध्यं प्रविश्य व्यापादितानेकक्रूरसत्त्वो मध्याह्नसहस्रकर-किरणजालतापतप्तः परिश्रान्तश्च विश्रमितुकामः कस्यापि प्रच्छायशीतलस्य प्रसन्नमधुरसलिलात्सरसो नातिदूरवर्तिनः क्षीरतरोर्मूलमुपगत्य परि-चारकपरिकल्पितं सुकुमारतरं नवकिसलयशयनमधिशयानः किङ्करोप-नीतानि कियन्तिचिन्मृणालानि फलानि मूलानि चास्वाद्य नलिनीदल-पुटोपनीतं च सलिलमासेव्य कैश्चन कमलपल्लवपाणिभिः पुलिन्दकुमारै-र्वीज्यमानगात्रस्तस्थौ ।

अथ कृष्णसारचर्मणोपकल्पितोत्तरीयो भसितचर्चिताशेषावयवस्त-त्तद्गात्रयोजिताक्षवलयमनोरमः कोऽपि सिद्धतापसस्तदेव तरुतलमुपतस्थौ । कमलानन्दस्तु तमवलोक्य प्रसन्नेन मनसा प्रेर्यमाणः सहानुचरैः सभक्त्युन्मेषं प्रणम्यासनं परिग्राहयामास । परिगृहीतासनस्तु तपोधनाः समवलोक्य तथाविधं कमलानन्दं विस्मयस्तिमित इव क्षणमासीत् ।

अथ मुहूर्तं निमील्य नयनद्वयं निर्वर्तितसमाधिः पुनः प्रतिक्षिप्य श्रीमति कमलानन्दे प्रणयगर्भां दृशं विजहास ।

कमलानन्दस्तु तेन तस्य तथाविधेनाचरितेन सञ्जातकुतूहलः पुनः प्रणम्य कृताञ्जलिर्विज्ञापयामास । भगवन्, अनेन भवदीयेन विश्वसनीयतमेन वपुषा मुखरीक्रियमाणो वाञ्छामि किमप्यनुयोक्तुम् । यदि च न कश्चिद्दोषस्तदानुगृह्यतामयं जनः प्रतिवचनप्रदानेनेति । अथ कुमार बाढमनुयुज्यतामिति तापसेनाभ्यनुज्ञातः पुनः प्रार्थयामास विनयावनतः कमलानन्दः । भगवन्नवलोकितमात्र एव मयि किमिति वा विस्मितं पूज्यपादेन किञ्च तदुत्तरं चिन्तितं किमिति च पुनरपि प्रक्षाल्य मां पवित्रतमेन वीक्षितेन विहसितं भगवतेति । वाञ्छाम्येतदवबोद्धुम् । तत्प्रसीद कथनेनास्य जनमिममनुग्रहीतुमिति ।

अथ तापसोत्तमः प्रसन्नगम्भीरया गिरा निजगाद । वत्स, श्रूयतां यदि कुतूहलम् । एष ते वेषः पुलिन्दभावं प्रत्याययति । आकृतिः पुनर्बोधयत्यसाधारणमभिजातत्वम् । न किलापुण्यभाजां हीनकुलजन्मनां चैवंविधा अवयवसन्निवेशाः प्रभवन्ति । कुतश्चैवंविधा कान्तिः पुलिन्दानाम् । न हि वसन्तविकसितं सहकारतरुमधिष्ठितोऽपि वायसः कोकिलतां प्राप्नोति । इति त्वामवेक्षमाणस्यैव मे विस्मितं चेतः । अथ प्रणिधानेन साक्षात्कृतं त्वदीयं जात्यादिकं दैवविपाकं च । अहो अनित्यता संसारभावानाम् । अहो बलीयस्त्वं भवितव्यस्य । अहो विलसितं मोहस्य । यदेवंविधे कमलदलजललवचपलतमेऽपि संसारे जनाः श्रद्दधते च प्रणयं च वितन्वन्तीति चिन्तयत एव मे प्रादुरभूद्धासः । कुमारोत्तम, त्वं हि न पुलिन्दजातीयः । न किल प्रस्तराकरेषु रत्नानि नाम प्रभवन्ति । वत्स, क्षत्रियो भवानशेषभूपालमौलिमालालालनीयचरणार-

विन्दस्य राज्ञो वीरवर्मणस्तनयः। इत्यभिधाय कमलानन्दस्य पितुर्मातुश्च व्यापत्तिं शात्रवाणामुन्मेषं धात्र्या तदपवाहनं तस्याश्च जलेऽवमज्जनं पुलिन्दपतिना चास्य ग्रहणमित्यादिकमशेषमप्युदन्तं कथयामास।

कमलानन्दस्तु सुप्तोत्थित इव व्यपेतमोहजालः परं विस्मयमुपारूढश्च विनिन्दन्नात्मनो भागधेयानि कामप्यनिर्वचनीयामवस्थितिमन्वभवत्। प्रपेदे चाशरण इव तापसोत्तमस्य चरणारविन्दं शरणम्। तपोनिधिरपि कृपापरवशस्तमनुगृह्य पुनः पित्र्यपदासादनोपायमुपदिश्य च सह कमलानन्दस्य पुलिन्दभावेनान्तरधात्।

कुमारः कमलानन्दोऽपि तत्क्षणपरित्यक्तपुलिन्दजनसंसर्गस्तापसोपदिष्टेन विधिना पित्र्यं पदमासाद्य विजिताशेषारिमण्डलः सुचिरं धरां पालयामास।

[ संस्कृतचन्द्रिकायाम् ]

---

**प्रश्नाः**—कैः कथं वाध्यापितः कमलानन्दः? कुत्रागच्छत् स वयस्यगणैः सह? कमपश्यत् स तत्र? केन कारणेन सञ्जातकुतूहलः कमलानन्दः? किं कथितं तेन तापसेन तस्मै? किमकरोत् ततः कमलानन्दः?

**विशदीकरणम्**—(१) कमलानन्दः सङ्ग्रामकलायामद्वितीयतामापेदे। (२) तं सभक्त्युन्मेषं प्रणम्यासनं परिग्राहयामास। (३) भवदीयेन विश्वसनीयतमेन वपुषा मुखरीक्रियमाणोऽहम्। (४) न हि वसन्तविकसितं सहकारतरुमधिष्ठितोऽपि वायसः कोकिलतां प्राप्नोति। (५) तपोनिधिरपि सह कमलानन्दस्य पुलिन्दभावेनान्तरधात्।

**तृतीयायाः प्रयोगविशेषाः**—

१ भीमो गदया सुयोधनोरू चूर्णयति। बालको मातरं चक्षुषा निरूपयति कर्णेन च तस्याः शब्दं शृणोति।

२ जात्या क्रूरो वन्यः पशुः। गोत्रेण कौशिकोऽहम्। प्रकृत्या दर्शनीयः कृष्णः।

३ कियता मूल्येन क्रीतमिदं पुस्तकम् ? द्रोणेन धान्यं विक्रीणीते।

४ जना नौकया सागरं विमानेन चाकाशं तरन्ति । नृपः पशुना रुद्रं यजते ।

५ सेवको भारं स्कन्धेन वहति । सिंहो मूषकं करेण धारयति । प्रभोराज्ञां मूर्ध्ना आदाय मारुतिः प्रस्थितः ।

६ कतमेन दिग्भागेन गतः स चौरः । अनेन वर्त्मना गन्तव्यं त्वया । जीवितेन शपति दुष्यन्तः शकुन्तलायै ।

७ रूपेण स्वरेण च रामभद्रमनुहरति लवः। स्वभक्त्या राधिका अतिशेते पूर्वान् भागवतान् । त्यागे धनदेन समः—सदृशः स नृपः ।

८ रामेण सह—सार्धं लक्ष्मणो गच्छति—रावणो युध्यते । पाण्डवैः समं-साकं द्रौपदी वने वसति ।

९ रामेण वियोगः प्राप्तो दशरथस्य । मेघस्य विद्युता वियोगो माभूत् ।

१० मासेन पाठः शिष्येणाधीतः । द्वादशवर्षैर्व्याकरणं श्रूयते । पञ्चषैर्दिवसैर्वयमेव तत्र गन्तारः ।

११ विशुद्धत्वेन त्वयि मम भक्तिर्दृढीभवति । कुमारस्य गुरुभक्त्या प्रीतः पिता। कापुरुषः स्वल्पकेन तुष्यति । अर्जुनस्य प्रावीण्येन विस्मिता जनाः । बालानां प्रागल्भ्येन प्रमादेन च गुरुर्लज्जते ।

१२ स पुरुषः कर्णेन बधिरः—अक्ष्णा काणः—पादेन खञ्जः ।

१३ स जटाभिः तापसः, विनयेन शिष्यः शोभते ।

१४ अलं क्रोधेन स्वजने । अलम् आलस्येन । कृतम् अनेन अश्वेन । कृतम् अनया अक्षक्रीडया ।

१५ किं क्रियते तया धेन्वा या दुग्धं न ददाति । तृणेन कार्यं भवतीश्वराणाम् । उद्योगिनः पुरुषस्य सेवकैर्न प्रयोजनम् । बालत्वेऽपगते कोऽर्थः पठनेन। को गुणो मूढेन सानुरागेण च भृत्येन ।

---

# द्वाविंशः पाठः ।

## निदाघवर्णनम् ।



प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षमवारिसञ्चयः ।
दिनान्तरम्योऽभ्युपशान्तमानसो निदाघकालः समुपागतः सखे ॥ १ ॥

निशाः शशाङ्कक्षतनीलराजयः क्वचिद्विचित्रं जलयन्त्रमन्दिरम् ।
मणिप्रकाराः सरसं च चन्दनं शुचौ सखे यान्ति जनस्य सेव्यताम् ॥ २ ॥

असह्यवातोद्धतरेणुमण्डला प्रचण्डसूर्यातपतापिता मही ।
न शक्यते द्रष्टुमपि प्रवासिभिः श्रमाकुलैर्गेहनिवृत्तमानसैः ॥ ३ ॥

मृगाः प्रचण्डातपतापिता भृशं तृषा महत्या परिशुष्कतालवः ।
वनान्तरे तोयमिति प्रधाविता निरीक्ष्य भिन्नाञ्जनसन्निभं नभः ॥ ४ ॥

तृषा महत्या हतविक्रमोद्यमः श्वसन् मुहुर्भूरिविदारिताननः ।
न हन्त्यदूरेऽपि गजान् मृगाधिपो विलोलजिह्वश्चलिताग्रकेसरः ॥ ५ ॥

विशुष्ककण्ठोद्गतशीकराम्भसो गभस्तिभिर्भानुमतोऽभितापिताः ।
प्रवृद्धतृष्णोपहता जलार्थिनो न दन्तिनः केसरिणोऽपि बिभ्यति ॥ ६ ॥

रवेर्मयूखैरभितापितो भृशं विदह्यमानः पथि तप्तपांसुभिः ।
अवाङ्मुखो जिह्मगतिः श्वसन् मुहुः फणी मयूरस्य तले निषीदति ॥ ७ ॥

हुताग्निकल्पैः सवितुर्मरीचिभिः कलापिनः क्लान्तशरीरचेतसः ।
न भोगिनं घ्नन्ति समीपवर्तिनं कलापचक्रेषु निवेशिताननम् ॥ ८ ॥

विवस्वता तीव्रतरांशुमालिना सपङ्कतोयात् सरसोऽभितापितः ।
उत्प्लुत्य भेकस्तृषितस्य भोगिनः फणातपत्रस्य तले निषीदति ॥ ९ ॥

रविप्रभोद्भिन्नशिरोमणिप्रभो विलोलजिह्वाद्वयलीढमारुतः ।
विषाग्निसूर्यातपतापितः फणी न हन्ति मण्डूककुलं तृषाकुलः ॥ १० ॥

[ ऋतुसंहारे ]

---

**प्रश्नाः**—कीदृशः सूर्यो निदाघे? दिनस्य को भागो रम्यो ग्रीष्मकाले? जनाः किं सेवन्ते तदा? किमनुभवन्ति पथिकाः? कुत्र धावन्ति मृगाः? किमर्थम्? केन कारणेन सिंहो गजं न हन्ति? कस्मात् कारणाच्च गजाः सिंहान्न बिभ्यति? कुत्र निषीदति आतपतापितः फणी? केन सह तस्य स्वभाववैरम्? किमर्थं भेकः सरस उत्प्लवते?

**परीक्षणम्ः**—अस्मिन् काव्ये स्वभावोक्तिः कुत्र दृश्यते। अतिशयोक्तिश्च केषु श्लोकेषु। चरमेषु पञ्चश्लोकेषु को रसः स्फुटं ज्ञायते। के श्लोका मधुरतमा भवन्ति। चतुर्थे श्लोके कैः पदैर्मृगजलं वर्णितम्। अपि युक्तं तत् तद् विशेषणपदम्। किमक्षरं बहुधा दृश्यते। कस्तस्य परिणामः। पञ्चमे श्लोके 'मृगाधिपस्य' यानि विशेषणपदानि तेषामौचित्यं दर्शयत। तथैव च सप्तमेऽष्टमे च श्लोके। दशमे श्लोके कथं त्रिविधस्तापो दर्शितः फणिनः।

**शब्दप्रयोगाः**—एतेषु श्लोकेषु प्रयुक्तान् समानार्थान् शब्दान् विचिनुत। सूर्यः—किरणाः—सर्पः—मयूरः—गजः—सिंहः—भेकः।

**समासाः**—अवगाहक्षमवारिसञ्चयः। शशाङ्कक्षतनीलराजयः। गेहनिवृत्तमानसैः। विलोलजिह्वः। प्रवृद्धतृष्णोपहताः। हुताग्निकल्पैः। सपङ्कतोयात्। फणातपत्रस्य। ( ऐतेषां विग्रहान् कृत्वा नामानि कथयत। )

**काव्यवृत्तम्**—एतेषां श्लोकानां वृत्तं वंशस्थम्। ( जतौ तु वंशस्थमुदीरितं जरौ। )

| ज | त | ज | र |
|---|---|---|---|
| प्रचण्ड | सूर्यः स्पृ | हणीय | चन्द्रमाः |

**एतेषु श्लोकेषु के रसा दृश्यन्ते—**

१ अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।

जनस्थाने शून्ये करुणकरुणै रामचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ १ ॥

२ स्थाणुः स्वयं मूलविहीन एव पुत्रो विशाखो रमणी त्वपर्णा ।
परोपनीतैः कुसुमैरजस्रं फलत्यभीष्टं किमिदं विचित्रम् ॥ २ ॥

३ असारे खलु संसारे सारं श्वशुरमन्दिरम् ।
हरो हिमालये शेते हरिः शेते च सागरे ॥ ३ ॥

४ गङ्गातीरे हिमगिरितले बद्धपद्मासनस्य
ब्रह्मध्यानेऽभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः शृङ्गमङ्गे मदीये ॥ ४ ॥

---

# त्रयोविंशः पाठः ।

## " उद्धरेदात्मनात्मानम् " ।



विदितमेव शीर्षकभूतमेतद्भगवतो वचनं सर्वेषाम् । अत्र किल यत्र कुत्रापि विपदि निमग्नमात्मानमात्मनैव समुद्धरेन्न तु तत्रापरेषां साहाय्यमपेक्षेतेति प्रतिपाद्यते । युक्तं चैतत् । तथाहि । विरलाः किल विपदि साहाय्यस्याधातारः । सर्वेऽपि खलु सम्पदि बन्धुतां प्रकटीकुर्वन्ति । समुपस्थितायां पुनर्विपदि नैव भवति कोऽपि कस्यापि सहायो नाम । प्रत्युत सुहृदोऽपि विद्वेषिण इव सम्पद्यन्ते । तदेतदुक्तं कविना शूद्रकेण । ' सर्वोऽपि बन्धुः समसंस्थितस्य न कोऽपि बन्धुर्विषमस्थितस्य । ' इति । अपरेऽपि प्राहुः । ' वनानि दहतो वह्नेः सखा भवति मारुतः । स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ' ॥ इति । अतो विपन्नेन स्वयमेवात्मा

समुद्धरणीयो भवति। यदि पुनः सोऽयं विपद्यपि साहाय्याप्त्यर्थं परमुखं प्रेक्षेत केवलमात्मानं नोद्धर्तुं प्रभवेत् प्रत्युत स्थूणानिखननन्यायेन समधिकमेव विपदि निमज्जयेदात्मानम्। अत एवोक्तं भगवता 'उद्धरेदात्मनात्मानम्' इति।

इह खलु जगति प्रत्युपकारापेक्षयैव परोपकारप्रवृत्तिः प्रायेण सर्वेषां सन्दृश्यते। सौरभस्य फलस्यापि वा प्रत्याशया तरवः पोष्यन्ते। पयसः कृते गावः परिपाल्यन्ते। आत्मनः साहाय्यमाचरिष्यन्तीति सुहृत्सु सौहार्दमाविष्क्रियते। चिराय किल परिपालयिष्यतीति भृत्यैरपि प्रभुः संसेव्यते। किमधिकम्। यत्किलात्मनिर्विशेषं वात्माभ्यधिकं वा परिपाल्यन्ते पुत्राः पित्रादिभिस्तत्रापि ननु प्रत्युपकारापेक्षैव प्रधानं निदानमित्यत्र नास्ति सन्देहः। पुत्रा ह्यात्मनो वार्द्धके साहाय्यमाचरिष्यन्ति च परिपालयिष्यन्ति च प्रदास्यन्ति च निवापोदकं परस्तादित्येवमभिसन्धायैव तेषु पित्रादयः समधिकं स्निह्यन्ति। यतः पुनर्यस्य नास्ति पत्युपकारप्रत्याशा नैवासौ तस्मिन् सविशेषं स्निह्यतीति सामान्योऽयं लौकिकानां नियमः।

अत एव पदे पदे भिक्षार्थमटन्तो भूयांसः पुरुषाः प्रायेण सर्वैरप्यनाद्रियमाणाः सन्दृश्यन्ते। एतावता पुनरेतदेव पर्यवस्यति यद्यस्मात्किल नास्ति प्रत्युपकारप्रत्याशा तेन खलु स्वयमेवात्मा समुद्धरणीयो भवतीति। अत एवोक्तं भगवता 'उद्धरेदात्मनात्मानम्' इति।

[ सूनृतवादिन्याम् ]

---

**प्रश्नाः**—अस्य पाठस्य शीर्षकभूतं वचनं केनोक्तं भवति? कस्तस्यार्थः? सम्पदि किमर्थं सर्वे बन्धुतां प्रकटीकुर्वन्ति? विपदि तु किमर्थं बान्धवा अपि

पराङ्मुखीभवन्ति? विपन्नेन नरेण कथं स्वात्मा समुद्धरणीयः? किमर्थं परोपकारः क्रियते जनैः?

**प्रयोगान्तराणि**—( १ ) विरलाः किल विपदि साहाय्यस्याधातारः । ( नञ्युक्तः प्रयोगः क्रियताम् । ) ( २ ) वनानि दहतो वह्नेः सखा भवति मारुतः । ( 'यदा–तदा' इति पदद्वयेनाभिप्रायो वक्तव्यः । ) ( ३ ) प्रत्युपकारापेक्षयैव परोपकारवृत्तिः सर्वेषां सन्दृश्यते । ( द्वाभ्यां वाक्याभ्यामस्यार्थं उच्यताम् । ) ( ४ ) यतः पुनर्यस्य नास्ति प्रत्युपकारप्रत्याशा नैवासौ तस्मिन् सविशेषं स्निह्यति । ( 'यदि–तर्हि' इति पदद्वयेनाभिप्रायो वक्तव्यः । )

**चतुर्थ्याः प्रयोगविशेषाः**—

१ गुरवे दक्षिणा प्रदेया । नृपतिर्युद्धाय सन्नह्यते । लक्ष्मणाय सुमित्रां प्रार्थयते वसिष्ठः ।

२ बालाय मोदको रोचते । युधिष्ठिराय सत्यं रोचते ।

३ कृपणो धनाय स्पृहयति, लुभ्यति वा । नृपाणां स्पृहा भोगेभ्यो, न तु प्रजाहिताय ।

४ द्वौ वरौ धारयति दशरथः कैकेय्यै । द्रव्यशतं धारयति भिक्षुर्धनिकाय ।

५ दुर्योधनो भीमाय क्रुध्यति—कुप्यति—द्रुह्यति—ईर्ष्यति—असूयति वा । ( किन्तु ) भीमम् अभिद्रुह्यति —अभिक्रुध्यति वा दुर्योधनः ।

६ भीमो दुर्योधनवधं द्रौपद्यै प्रतिश्रृणोति ।

७ यतसे परोपकाराय धनाय वा । यूपाय दारु । कञ्चुकाय वस्त्रम् । कुण्डलाय सुवर्णम् । उत्खननाय खनित्रम् ।

८ फलेभ्यः कुमारः उद्यानं याति । स वनाय गां मुञ्चति । समिदाहरणाय शिष्याः प्रस्थिताः वनम् ।

९ प्रजारक्षणाय कल्पते नृपः । सच्छीलं कल्याणाय भवति । वाताय कपिला विद्युत् । ब्राह्मणाय हितं—सुखं वा ।

१० अग्नये नमः–स्वाहा–स्वधा–वषट् । यजमानाय स्वस्ति । दुग्धं क्षुधितस्य तृप्त्यै अलम् । रावणवधाय रामः अलम्—प्रभुः—शक्तो वा । मल्लो मल्लाय प्रभवति ।

११ देवतां देवतायै वा नमस्कुर्मः—प्रणमामः । स्वागतं दुष्यन्ताय कुशलं च ।

१२ रामचन्द्राय मारुतिः सीतावृत्तान्तं कथयति—आख्याति—शंसति—आचक्षते—निवेदयति वा ।

१३ पाण्डवाः कौरवश्रेष्ठाय कृष्णं दूतं प्रेषयन्ति । दुर्योधनस्तु तं तृणाय—तृणं वा मन्यते ।

---

# चतुर्विंशः पाठः ।

## भरतस्य प्रतिमागृहप्रवेशः ।



**भरतः**—( किञ्चिद् गत्वावलोक्य ) कस्य नु खलु दैवतस्य स्थानं भविष्यति। नेह किञ्चित् प्रहरणं ध्वजो वा बहिश्चिह्नं दृश्यते। भवतु, प्रविश्य ज्ञास्ये । ( प्रविश्यावलोक्य ) अहो क्रियामाधुर्यं पाषाणानाम्। अहो भावगतिराकृतीनाम् । दैवतोद्दिष्टानामपि मानुषविश्वासतासां प्रतिमानाम्। किन्नु खलु चतुर्दैवतोऽयं स्तोमः। अथवा यानि तानि भवन्तु। अस्ति तावन्मे मनसि प्रहर्षः।

कामं दैवतमित्येव युक्तं नमयितुं शिरः।
वार्षलस्तु प्रणामः स्यादमन्त्रार्चितदैवतः ॥ १ ॥

( प्रविश्य )

**देवकुलिकः**—भो नैत्यकावसाने प्राणिधर्ममनुतिष्ठति मयि को नु खल्वयमासां प्रतिमानामल्पान्तराकृतिरिव प्रतिमागृहं प्रविष्टः । भवतु, प्रविश्य ज्ञास्ये।

( प्रविशति। )

**भरतः**—नमोऽस्तु ।

**देवकुलिकः**—न खलु न खलु प्रणामः कार्यः ।

**भरतः**—मा तावद् भोः ।

वक्तव्यं किञ्चिदस्मासु विशिष्टः प्रतिपाल्यते ।
किं कृतः प्रतिषेधोऽयं नियमप्रभविष्णुना ॥ २ ॥

**देवकुलिकः**—न खल्वेतैः कारणैः प्रतिषेधयामि भवन्तम् । किन्तु दैवतशङ्कया ब्राह्मणजनस्य प्रणामं परिहरामि । क्षत्रिया ह्यत्रभवन्तः ।

**भरतः**—एवम् । क्षत्रिया ह्यत्रभवन्तः । अथ के नामात्रभवन्तः ।

**देवकुलिकः**—इक्ष्वाकवः ।

**भरतः**—( सहर्षम् ) इक्ष्वाकव इति । एते तेऽयोध्याभर्तारः ।

एते ते दैवतानामसुरपुरवधे गच्छन्त्यभिसरीन्—
एते ते शक्रलोके सपुरजनपदा यान्ति स्वसुकृतैः ।
एते ते प्राप्नुवन्तः स्वभुजबलजितां कृत्स्नां वसुमती-
मेते ते मृत्युना ये चिरमनवसितास्छन्दं मृगयता ॥ ३ ॥

भो यदृच्छया खलु मया महत् फलमासादितम् । अभिधीयतां कस्तावदत्रभवान् ।

**देवकुलिकः**—अयं खलु तावत् सन्निहितसर्वरत्नस्य विश्वजितो यज्ञस्य प्रवर्तयिता प्रज्वलितधर्मप्रदीपो दिलीपः ।

**भरतः**—नमोऽस्तु धर्मपरायणाय । अभिधीयतां कस्तावदत्रभवान् ।

**देवकुलिकः**—अयं खलु तावत् संवेशनोत्थापनयोरनेकब्राह्मण-जनसहस्रप्रयुक्तपुण्याहशब्दरवो रघुः ।

**भरतः**—अहो बलवान्मृत्युरेतामपि रक्षामतिक्रान्तः । नमोऽस्तु ब्राह्मणजनावेदितराज्यफलाय । अभिधीयतां कस्तावदत्रभवान् ।

**देवकुलिकः**—अयं खलु तावत् प्रियावियोगनिर्वेदपरित्यक्तराज्य-भारो नित्यावभृथप्रशान्तरजा अजः ।

**भरतः**—नमोऽस्तु श्लाघनीयपश्चात्तापाय । ( दशरथप्रतिमा-मवलोकयन् पर्याकुलो भूत्वा ) भो बहुमानव्याक्षिप्तेन मनसा सुव्यक्तं-नावधारितम् । अभिधीयतां कस्तावदत्रभवान् ।

**देवकुलिकः**—अयं दिलीपः ।

**भरतः**—पितृपितामहो महाराजस्य । ततस्ततः ।

**देवकुलिकः**—अत्रभवान् रघुः ।

**भरतः**—पितामहो महाराजस्य । ततस्ततः ।

**देवकुलिकः**—अत्रभवानजः ।

**भरतः**—पिता तातस्य । किमिति किमिति ।

**देवकुलिकः**—अयं दिलीपः, अयं रघुः, अयमजः ।

**भरतः**—भवन्तं किञ्चित् पृच्छामि । धरमाणानामपि प्रतिमाः-स्थाप्यन्ते ?

**देवकुलिकः**—न खलु, अतिक्रान्तानामेव ।

**भरतः**—तेन ह्यापृच्छे भवन्तम्—।

**देवकुलिकः**—तिष्ठ ।

येन प्राणाश्च राज्यं च स्त्रीशुल्कार्थे विसर्जिताः ।
इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसि ॥ ४ ॥

**भरतः**—हा तात। ( मूर्च्छितः पतति। पुनः प्रत्यागत्य )

हृदय भव सकामं यत्कृते शङ्कसे त्वं
श्रृणु पितृनिधनं तद् गच्छ धैर्यं च तावत्।
स्पृशति तु यदि नीचो मामयं शुल्कशब्द-
स्त्वथ च भवति सत्यं तत्र देहो विशोध्यः॥ ५॥

आर्य—

**देवकुलिकः**—आर्येति इक्ष्वाकुकुलालापः खल्वयम्। कच्चित् कैकेयीपुत्रो भरतो भवान् ननु।

**भरतः**—दशरथपुत्रो भरतोऽस्मि, न कैकेय्याः।

**देवकुलिकः**—तेन ह्यापृच्छे भवन्तम्।

**भरतः**—तिष्ठ, शेषमभिधीयताम्।

**देवकुलिकः**—का गतिः। श्रूयताम्। उपरतस्तत्रभवान् दशरथः। सीतालक्ष्मणसहायस्य रामस्य वनगमनप्रयोजनं न जाने।

**भरतः**—कथं कथम्, आर्योऽपि वनं गतः?

( द्विगुणं मोहमुपागतः। )

**देवकुलिकः**—कुमार, समाश्वसिहि समाश्वसिहि।

**भरतः**—( समाश्वस्य )

अयोध्यामटवीभूतां पित्रा भ्रात्रा च वर्जिताम्।
पिपासार्तोऽनुधावामि क्षीणतोयां नदीमिव॥ ६॥

[ प्रतिमायाम् ]

---

**प्रश्नाः**—दैवतस्थानस्य किं बहिश्चिह्नं भवति ? कीदृश्यः प्रतिमास्तत्र भरतेन दृष्टाः ? दैवताय किमर्थममन्त्रार्चितप्रणामो न कार्यः ? यदा भरतः प्रतिमागृहं प्रविष्टस्तदा किं कुर्वन्नास्ते देवकुलिकः ? किमर्थं देवकुलिकेन भरतस्य देवताप्रणामो निवारितः ? किमर्थं भरतो दशरथस्य प्रतिमां दृष्ट्वा तां न पृच्छति ? केषां प्रतिमास्तत्रासन् ?

**पराक्रमवर्णनम्**—इक्ष्वाकुवंशीयानां नृपाणां पराक्रमा विस्तरेण वर्ण्यन्ताम् । प्रत्येकं यानि विशेषणपदानि प्रयुक्तानि तेषामौचित्यं प्रदर्शयत ।

**वृत्तम्**—तृतीयश्लोकस्य वृत्तम्–सुवदना ।

| म | र | भ | न | य | भ | लग |
|---|---|---|---|---|---|---|
| एते ते | दैवता | नामसु | रपुर | वधे ग | च्छन्त्यभि | सरीन् |

अन्येषां श्लोकानां वृत्तनामानि कथयत ।

**पञ्चम्याः प्रयोगविशेषाः**—

१ शालागृहात् कुमार आयाति ।

२ सौहृदात् रामो बिभीषणं लङ्काराज्ये स्थापयति । अतिलोभात् बद्धास्ते कपोताः ।

३ पर्वतो वह्निमान्, धूमात् । जीर्णत्वात् रज्जुस्त्रुट्यति ।

४ द्राक्षाया आम्रं मधुरतरम् । विद्यायाः श्रेयसी बुद्धिः । अश्वमेधसहस्रेभ्यः सत्यमेवातिरिच्यते । विद्याभ्यासस्य अपराह्णात् प्रातःकालो विशिष्यते ।

५ प्रासादात् नृपः प्रेक्षते । श्वशुरात् जिह्रेति स्नुषा ।

६ पापात् जुगुप्सते–विरमति–निवर्तते पुरुषः । स्वाधिकारात्प्रमत्तः पुरुषः । सुखासीनो धर्मात् मुह्यति ।

७ आचार्यात् शिक्षिता–अधीता विद्या । प्राणात् वायुरजायत । हिमाचलात् गङ्गा प्रभवति ।

८ मरणात् बिभेति जनः । घोरनादात् त्रस्तः—उद्विग्नो बालः ।

९ भीमात् दुःशासनं त्रातुं यतते कर्णः । मित्रं मां पापात् निवारयति हिताय योजयते च । अध्ययनात् पराजयते मन्दः ।

१० समुद्रात् पुरी योजनम् । रामजन्मनः षट्सु दिवसेषु मारुतिजन्म । ग्रामात् पूर्वः–पश्चिमः–दक्षिणः सागरः । अद्य ग्रामं गत्वायं पञ्चषेभ्यो दिवसेभ्यः आगन्ता ।

११ कृष्णात् अन्यः–परः–भिन्नः–इतरः–ऋते न कोऽपि कंसहन्ता । गृहात् बहिः–ऊर्ध्वम्–परे–अन्तरम् । वनस्य दूरात्पर्वतोऽस्ति । गिरेरन्तिकात् नदी ।

१२ शैशवात् प्रभृति–आरभ्य शरीरबलं प्राप्तव्यम् । बहोः कालात् परं–अनन्तरं दृष्टं मित्रम् । दशरथात्पश्चाद्रामो राज्यं शशास ।

१३ रामात्–रामं–रामेण वा–विना–पृथक्–नाना न किमपि प्रियं मारुतेः ।

१४ आ कैलासात् सेतुपर्यन्तं स भ्रमति । कथां आमूलात् श्रोतुमिच्छामि । आ परितोषात् भोजनं कुरु ।

१५ मातुः निलीयते कृष्णः । कृषीवलः तिलेभ्यः प्रतियच्छति माषान् । गुरोः प्रति (प्रतिनिधिरिति) सभायां विवदते ।

---

# पञ्चविंशः पाठः ।

## दमयन्ती-विलापः ।



अथ निर्झरशीकरस्पृशा पवमानेन मृदूकृतश्रमा ।
अवलम्ब्य लताः शनैःशनैर्विचरन्तीदमुवाच भीमजा ॥ १ ॥
परिगृह्य पतत्रिणावुभौ त्वमसीति प्रतिपन्नमेव मे ।
अनयोः कथमेकमप्यहो दमयन्त्यै ननु न प्रयच्छसि ॥ २ ॥
पुर एव नरेन्द्र दृश्यसे विनिगूढार्धवपुर्लतान्तरे ।
इह दृग्विषये स्थितोऽपि मे प्रतिवाचं न कथं प्रयच्छसि ॥ ३ ॥
अलमेभिरकाण्डकौतुकैस्तरुमूलेऽत्र निषीद नैषध ।
चरणौ पथि खेदनिःसहौ तव संवाहयितुं समुत्सहे ॥ ४ ॥

रजसा परिधूसरीकृतं तुहिनेनेव वपुः सुधानिधेः ।
परिमार्ष्टुमनाः शनैः प्रभो वदनं तावकमेष मे करः ॥ ५ ॥
रविरम्बरमध्यमाश्रितः क्रमशस्ते वलितक्लमं वपुः ।
इदमम्बु गृहाण शीतलं नलिनीपत्रपुटे मयाहृतम् ॥ ६ ॥
अधिकुञ्जमिदं शिलातलं शिशिरं निर्झरवारिशीकरैः ।
इह ते श्रमशान्तये मया शयनीयं नवपल्लवैः कृतम् ॥ ७ ॥
परिहासकुतूहलेन मां यतसे त्रासयितुं कियच्चिरम् ।
ननु वञ्चनयानया कथं दयिता सा सभया भविष्यति ॥ ८ ॥
यदि वान्यवधूचितं भयं नृपते त्वन्महिषीमपि स्पृशेत् ।
अवधारय लोकवीर तद्भविता तेन विलज्जतेऽत्र कः ॥ ९ ॥
इति तत्र गिरः पदे पदे निगदन्ती विपिनं विगाह्य तत् ।
क्वचिदप्यविलोक्य वल्लभं दमयन्ती विललाप विक्लवा ॥ १० ॥
विपिने चरतोः पतत्रिणोरपराधः कतमः कृतो मया ।
यदिमौ नितरां प्रतार्य मां दयितं मे तिरयाम्बभूवतुः ॥ ११ ॥
अपि सप्तसमुद्रमुद्रिता वसुधा यस्य भुजेन रक्षिता ।
वनवाससखीमपि प्रियां स कथं रक्षितुमक्षमायते ॥ १२ ॥
कृतवानसि नाथ साम्प्रतं हतभाग्यामिह मां यदत्यजः ।
असवस्तु नितान्तनिष्कृपाः प्रतिमुञ्चन्ति न मामकं वपुः ॥ १३ ॥
महतीह विपन्मयेऽम्बुधौ तरिरासीत्त्वदुपासनैव मे ।
विधिनाद्य वियोजिता तया विनिमग्नास्मि वने निराश्रया ॥ १४ ॥
इह मां त्वदधीनजीवितां कथमुत्सृज्य गतोऽसि नैषध ।
करुणापि पणीकृता ध्रुवं नृपलक्ष्मीरिव दीव्यता त्वया ॥ १५ ॥

अपि वीक्षितुमक्षमा परैस्त्वदभिन्नैव पुरा विदर्भजा ।
फणिना त्वगिव त्वयोज्झिता शिशुनाप्यद्य पराभविष्यते ॥ १६ ॥
इह धन्यतमा परं मही क्वचिदास्ते सहितैव या त्वया ।
भवता रहिता दमस्वसा नृपलक्ष्मीश्च गताद्य शोच्यताम् ॥ १७ ॥
वसुधे विदधामि तेऽञ्जलिं न सपत्नीति रुषं कुरुष्व मे ।
कथय प्रभुरङ्घ्रिमुद्रया भवतीं यत्र तनोत्यलङ्कृताम् ॥ १८ ॥
अविषह्यविपाकजृम्भितं दमयन्त्या किल दुष्कृतं कृतम् ।
अपि काननवासविक्लवं दयितं सा परिहाय जीवति ॥ १९ ॥
अयि पाणिग्रहणेन मां प्रियां गमयित्वा सुखिनीषु मुख्यताम् ।
कथमाशु तपस्विनीष्वपि प्रथमोदाहरणत्वमानयः ॥ २० ॥
सुकृतं दुरितं च भूपते मम लोकोत्तरमेव दृश्यते ।
यदहं दयिता तवाभवं परिमुक्ता च वने यतस्त्वया ॥ २१ ॥
हृदयं मम निर्ममे विधिः कुलिशेनेति मया विनिश्चितम् ।
यदिदं शतधा न भिद्यते दयित त्वद्विरहाग्नितापितम् ॥ २२ ॥
परलोकजुषोऽपि वल्लभाननुगच्छन्ति कुलोद्भवाः स्त्रियः ।
हृदयेश्वरमन्तिके स्थितं मदृतेऽन्या कतमा विहास्यति ॥ २३ ॥
मम पाणिपरिग्रहः परं समभूत्ते विपदां निबन्धनम् ।
ग्रसते खलु सिंहिकासुतस्तपनं दर्शतिथेः समागमे ॥ २४ ॥
अथ सा नयनाम्बुवीचिभिः प्रसृताभिर्विनिगूढसञ्चरा ।
पुनरेव नरेन्द्रनन्दिनी परितस्तद्विचचार काननम् ॥ २५ ॥

[ सहृदयानन्दे ]

---

**काव्यवृत्तम्**—वियोगिनी वृत्तम् । ( विषमे ससजा गुरुः समे सभरालाथ गुरुर्वियोगिनी । )

| स | स | ज | गु | स | भ | र | लगु |
|---|---|---|---|---|---|---|---|
| अथ नि | र्झरशी | करस्पृ | शा | पवमा | नेन मृ | दूकृत | श्रमा |

**परीक्षणम्**—को रसोऽस्मिन्काव्ये स्फुटं दृश्यते। के श्लोका रम्यतमा भान्ति। प्रथमेषु नवश्लोकेषु कीदृशी दमयन्त्या मनोवृत्तिः स्फुटं दृश्यते। त्रयोदशे श्लोके किमर्थमासवो निष्कृपा इति कथितम्। पञ्चदशे श्लोके 'पणीकृता' इति पदेन किं पूर्ववृत्तं सूचितं दमयन्त्या। अष्टादशे श्लोके कामुद्दिश्य वदति दमयन्ती। एकविंशे श्लोके कीदृशं सुकृतं दुरितं चात्मनो वर्णितं दमयन्त्या। चतुर्विंशे श्लोके केनोपमितः 'पाणिपरिग्रहः'।

**वर्णनम्**—( १ ) वने विचरन्त्या दमयन्त्या किं किं दृष्टं तत् तत् कथयत। स्थाने स्थाने च के भावास्तस्या मनसि समुत्पन्नाः। ( २ ) दमयन्त्या एतादृशीं दुःस्थितिं दृष्ट्वा कस्यान्यस्य जनस्य तादृशी दुःखावस्था स्मर्यते युष्माभिः।

---

# षड्विंशः पाठः।

## उर्वशीकुमारः।



**कञ्चुकी**—जयतु जयतु देवः। देव, च्यवनाश्रमात् कुमारं गृहीत्वा सम्प्राप्ता तापसी देवं द्रष्टुमिच्छति।

**राजा**—उभयमप्यविलम्बितं प्रवेशय।

**कञ्चुकी**—यदाज्ञापयति देवः।

( इति निष्क्रम्य चापहस्तेन कुमारेण तापस्या च सह प्रविष्टः। )

**कञ्चुकी**—इत इतो भगवती ।

( सर्वे परिक्रामन्ति । )

**विदूषकः**—( विलोक्य ) किं नु खलु स एष तत्रभवान् क्षत्रियकुमारको यस्य नामाङ्कितो गृध्रलक्ष्यवेध्यर्धनाराचः । तथा बहुतरं भवन्तमनुकरोति ।

**राजा**—स्यादेवम् । अतः खलु—

बाष्पायते निपतिता मम दृष्टिरस्मिन्
वात्सल्यबन्धि हृदयं मनसः प्रसादः ।
सञ्जातवेपथुभिरुज्झितधैर्यवृत्ति-
रिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥ १ ॥

**कञ्चुकी**—एवं स्थीयताम् ।

( तापसीकुमारौ स्थितौ । )

**राजा**—अम्ब, अभिवादये ।

**तापसी**—महाभाग, सोमवंशविस्तारयिता भव । ( आत्मगतम् ) अहो अनाख्यातोऽपि विज्ञातोऽस्य राजर्षेरायुषश्चौरसः सम्बन्धः । ( प्रकाशम् ) जात, प्रणम ते गुरुम् । ( कुमारश्चापगर्भमञ्जलिं करोति । )

**राजा**—आयुष्मान् भव ।

**कुमारः**— ( आत्मगतम् )

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
उत्सङ्गवर्धितानां गुरुषु भवेत् कीदृशः स्नेहः ॥ २ ॥

**राजा**—भगवति, किमागमनप्रयोजनम् ?

**तापसी**—शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत् क्षत्रियकुमारस्य

जातकर्मादि विधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीतः ।

**राजा**—सनाथः खलु संवृत्तः ।

**तापसी**—अथ पुष्पसमिदर्थमृषिकुमारकैः सह गतेनानेनाश्रमविरुद्धमाचरितम् ।

**राजा**—( सावेगम् ) किमिव ।

**तापसी**—गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य ।

**विदूषकः**—( राजानमवलोकयति । )

**राजा**—ततस्ततः ।

**तापसी**—तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहमादिष्टा, निर्यातय हस्तन्यासमिति । तदिच्छामि देवीमुर्वशीं प्रेक्षितुम् ।

**राजा**—तेन ह्यासनमनुगृह्णातु भगवती ।

**तापसी**—( उपनीत आसन उपविशति । )

**राजा**—लातव्य, आहूयतामुर्वशी ।

**कञ्चुकी**—यथाज्ञापयति देवः ।

( इति निष्क्रान्तः । )

**राजा**—( कुमारमवलोक्य ) एह्येहि । वत्स,

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपगतेन ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥ २ ॥

**तापसी**—जात, आनन्दय पितरम् ।

**कुमारः**—( राजानमुपगम्य पादग्रहणं करोति । )

**राजा**—( कुमारं परिष्वज्य पादपीठे चोपवेश्य ) वत्स, इतस्तव पितुः प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

**विदूषकः**—किमिति शङ्किष्यते । नन्वाश्रमवासपरिचित एव शाखामृगः ।

**कुमारः**—( सस्मितम् ) तात, वन्दे ।

**विदूषकः**—स्वस्ति भवते ।

( ततः प्रविशत्युर्वशी कञ्चुकी च )

**कञ्चुकी**—इत इतो देवी ।

**उर्वशी**—( कुमारमवलोक्य ) को नु खल्वेष सबाणासनः पादपीठे स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति । ( तापसीं दृष्ट्वा ) अहो सत्यवतीसूचितो मम पुत्रक आयुः । महान् खलु संवृत्तः ।

( परिक्रामति । )

**राजा**—( उर्वशीं दृष्ट्वा )

इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।
स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥ ४ ॥

**तापसी**—जात, एहि प्रत्युद्गच्छ मातरम् ।

**कुमारः**—( उर्वशीं प्रत्युद्गच्छति । )

**उर्वशी**—अम्ब, पादप्रणामं करोमि ।

**तापसी**—वत्से, भर्तुर्बहुमता भव ।

**उर्वशी**—( कुमारमुन्नतमुखं परिष्वज्य ) वत्स, पितरमाराधयिता भव । ( राजनमुपेत्य ) जयतु महाराजः ।

**राजा**—स्वागतं पुत्रवत्यै । इत आस्यताम् । ( अर्धासनं ददाति । )

( सर्वे यथोचितमुपविशन्ति । )

**तापसी**—वत्से, एष गृहीतविद्य आयुः साम्प्रतं कवचार्हः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । तद्विसर्जयितुमिच्छामि । उपरुध्यते ममाश्रमधर्मः ।

**उर्वशी**—चिरस्यार्यां दृष्ट्वाधिकतरमवितृष्णास्मि । न शक्नोमि विस्रष्टुम् । अन्याय्यं पुनरुपरोद्धुम् । तद्गच्छत्वार्या पुनर्दर्शनाय ।

**तापसी**—एवं भवतु ।

**कुमारः**—आर्ये, यदि सत्यमेव निवर्तसे तदा मामप्याश्रमं नेतुमर्हसि ।

**राजा**—अयि वत्स, उषितं त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितुं तव समयः ।

**तापसी**—जात, गुरोर्वचनमनुतिष्ठ ।

**कुमारः**—तेन हि—

यः सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम् ॥ ५ ॥

**तापसी**—( विहस्य ) एवं करोमि । स्वस्ति भवतु युष्मभ्यम् ।

( निष्क्रान्ता । )

[ विक्रमोर्वशीये ]

---

**प्रश्नाः**—केन चिह्नेन तस्य कुमारस्य जातिः प्रकटीकृता ? किमभवद्राज्ञस्तं कुमारं दृष्ट्वा ? कथं राजर्षेः कुमारस्य च पितापुत्रयोः सम्बन्धस्तापस्या विज्ञातः ? किमर्थं स कुमारः प्रत्यानीतो राजगृहम् ? 'शाखामृगः' इति पदेन

किं सूचयति विदूषकः ? केन कारणेनोर्वशी दृष्टमात्रमेव स्वकुमारं विज्ञातुं न शक्ता ? कथं राजगृह आश्रमधर्म उपरुध्यते ? किमर्थं स कुमार आश्रमं प्रति निवर्तितुमिच्छति ?

**परीक्षणम्**—आश्रमधर्मान्तर्गताः के नियमा युष्माभिर्ज्ञाताः । राजकुमारा अपि अनयाश्रमनीत्या दृढं नियमिता इत्यनेन किं सूचितं भवति ।

**स्वभावपरीक्षणम्**—( १ ) यानि यानि स्थानानि आयुषो बाल-स्वभावं दर्शयन्ति तानि प्रदर्शयत । ( २ ) विदूषकस्य तापस्याश्च स्वभाव-वर्णनं कुरुत ।

**वृत्तम्**—अस्यां कथायां वर्तमानानां सर्वेषां श्लोकानां वृत्तानि कथयत ।

**षष्ठ्याः प्रयोगविशेषाः**—

१ तेषां चतुर्णां कुमाराणां रामः प्रियतमः । दुर्योधनभीमयोर्बलीयान् भीमः । द्विजानां ब्राह्मणः श्रेष्ठः । पाण्डवानां मध्ये धनुर्धारी ख्यातोऽर्जुनः ।

२ पञ्चसहस्रवर्षाणि व्यतीतानि कृष्णजन्मनः । भारतवर्षे क्षत्रियक्षयस्य संवत्सरसहस्रं व्यतीतम् ।

३ सर्वस्य हि प्रियं स्वीयमपत्यम् । क्षत्रियाणां प्रियः सङ्ग्रामः । मूर्खस्य कलहः प्रियः ।

४ किमन्तरं सूर्यस्य चन्द्रस्य च, सादृश्यं वा ? बुद्धकृष्णयोर्महदन्तरम् ।

५ देवतानाम् अनुग्राह्या भक्ताः । न किमपि असाध्यं भवति उद्यमस्य । शिष्याणां पूज्या गुरवः ।

६ अल्पस्य हेतोर्बहु हातुमिच्छति मूढः । सत्यपालनस्य हेतोः सङ्ग्रामः कृतः पाण्डवैः ।

७ सर्वथा कुशलं—हितं—भद्रं—कल्याणं वा उद्योगशीलस्य । तेजस्विनां सदा कीर्तिः स्थितिश्च ।

८ तरूणाम् अधः—अधस्तात्—उपरिष्टात् वा । ग्रामस्य दक्षिणतः—उत्तरतः—पश्चात्—पुरस्तात् वा । सैन्यस्य अग्रे—पुरः—पुरतः वा सेनापतिः । ग्रामस्य निकटं—दूरं वा वनम् । ग्रामस्य दक्षिणेन—उत्तरेण वा नदी वहति ।

९ बलिष्ठो दुर्बलानां प्रभवति। मुनिः इन्द्रियाणाम् ईष्टे। बहूनां भावानां प्रभवति दुर्गा। देवो भक्तस्य दयते। मातुः स्मरति पुत्रः।

१० गुणानां अभिज्ञः—अनभिज्ञो वा पुरुषः। सीतागतस्य वृत्तान्तस्य अभ्यन्तरः—अनभ्यन्तरो वा रामः।

११ दिनस्य द्विः—त्रिः—चतुः—पञ्चकृत्वः वा भोजनं क्रियते। मासस्य द्विः एकादशी। दिनस्य शतकृत्वः स्मरति भक्तः परमेशम्।

१२ सुशीलाः शिष्या गुरोः अभिमता भवन्ति। पाण्डवानां वासो न विदितः कौरवाणाम्।

१३ सर्वेषां समक्षं सीतयाऽग्निप्रवेशः कृतः। तस्याः कृते रावणेन सार्धं रामोऽयुध्यत।

१४ कृष्णस्य तुल्यः—सदृशः—समः—सङ्काशो वा न कोऽपि नीतिचतुरः। ( तृतीयापि युज्यतेऽत्र। )

१५ असत्यं न कदापि मनुजानाम् अनुरूपं भवति। द्यूतक्रीडा सच्छीलस्य सदृशी न भवति। पाण्डवाधिक्षेपोऽनुचितो दुर्योधनस्य।

---

# सप्तविंशः पाठः।

## उत्तङ्ककृतकुण्डलयाचनम्।



यत्र स क्षत्रियः पौष्यस्तमुपेत्यासीनमपश्यदुत्तङ्कः। स उत्तङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच। अर्थी भवन्तमुपागतोऽस्मीति। स एनमभिवाद्योवाच। भगवन्पौष्यः खल्वहं किं करवाणीति। स तमुवाच। गुर्वर्थं कुण्डलयोरर्थेनाभ्यागतोऽस्मि। ये वै ते क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति। तं प्रत्युवाच पौष्यः। प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति। स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत्। स

पौष्यं पुनरुवाच । न युक्तं भवताहमनृतेनोपचरितुं न हि तेऽन्तःपुरे क्षत्रिया सन्निहिता, नैनां पश्यामि । स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच । नियतं भवानुच्छिष्टः । स्मर तावत् । न हि सा क्षत्रियोच्छिष्टेनाशुचिना शक्या द्रष्टुम् । पतिव्रतात्वात्सैषा नाशुचेर्दर्शनमुपैतीति । अथैवमुक्त उत्तङ्कः स्मृत्वोवाच । अस्ति खलु मया तु भक्षितं नोपस्पृष्टमागच्छतेति । तं पौष्यः प्रत्युवाच । एष ते व्यतिक्रमो नोत्थितेनोपस्पृष्टं भवति शीघ्रमागच्छतेति ।

अथोत्तङ्कस्तं तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपादवदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिः पीत्वा द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश । ततस्तां क्षत्रियामपश्यत्सा च दृष्ट्वैवोत्तङ्कं प्रत्युत्थायाभिवाद्योवाच । स्वागतं ते । भगवन्नाज्ञापय किं करवाणीति । स तामुवाचैते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति । सा प्रीता तेन तस्य सद्भावेन पात्रमयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले अवमुच्यास्मै प्रायच्छदाह चैनम् । एते कुण्डले तक्षको नागराजः सुभृशं प्रार्थयत्यप्रमत्तो नेतुमर्हसीति । स एवमुक्तस्तां क्षत्रियां प्रत्युवाच । भवती सुनिर्वृता भवतु । न मां शक्तस्तक्षको नागराजो धर्षयितुमिति ।

स एवमुक्त्वा तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् । आह चैनम् । भोः पौष्य प्रीतोऽस्मीति । तं पौष्यः प्रत्युवाच । भगवंश्चिरेण पात्रमासाद्यते । भवांश्च गुणवानतिथिस्तदिच्छे श्राद्धं कर्तुं क्रियतां क्षण इति । तमुत्तङ्कः प्रत्युवाच । कृतक्षण एवास्मि । शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृतं भवतेति । स तथेत्युक्त्वा यथोपपन्नेनान्नेनैनं भोजयामास ।

[ महाभारते ]

---

**प्रश्नाः**—किमर्थमुत्तङ्कः पौष्यस्य गृहमागतः ? कुत्रास्तां ते कुण्डले ? किमर्थं स तां क्षत्रियां नापश्यत् प्रथमतः ? कदा पुनर्दृष्टा तेन सा क्षत्रिया ? कस्यार्थं तेन कुण्डले याचिते ? किं मनसिकृत्य सा क्षत्रिया तस्मै कुण्डले प्रायच्छत् ? कुण्डले गृहीत्वा गच्छते तस्मै किं प्रबोधनं दत्तं क्षत्रियया ?

**परीक्षणम्**—( १ ) अस्मिन् पाठे ब्राह्मणानां क्षत्रियाणां च के धर्मा निर्दिष्टाः ? ( २ ) कदा गुरुदक्षिणा दातव्या शिष्यैः किमर्थं च ?

**प्रयोगान्तराणि**—( १ ) न युक्तं भवताऽहमनृतेनोपचरितुम् । ( 'भवान्' इति पदं कर्तृत्वेन प्रयोक्तव्यम् । ) ( २ ) अस्ति खलु मया भक्षितं नोपस्पृष्ट-मागच्छता । ( द्वाभ्यां वाक्याभ्यामभिप्रायो वाच्यः । ) ( ३ ) एते कुण्डले नागराजः सुभृशं प्रार्थयत्यप्रमत्तो नेतुमर्हसि । ( अस्यार्थो विशदीक्रियताम् । )

**सप्तम्याः प्रयोगविशेषाः**—

१ दीने दयां करोति दयालुः । दीनेषु मा भवाकरुणः । जडविषयेषु निःस्पृहो भवति मेधावी । कुमारी मालां शिरसि वहति ।

२ गोषु कृष्णा बहुक्षीरा वर्तते । धन्विषु रामः श्रेष्ठः ।

३ अद्यैतं पाठं पठित्वा पुनरपि त्र्यहे ( त्र्यहात् वा ) पठाम एनम् । अत्र स्थित्वा अहमग्न्यस्त्रेण क्रोशे लक्ष्यं विध्येयम् ।

४ चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥ १ ॥ ( चर्मणि—चर्मणः कृते इत्यर्थः । )

५ गुरौ विनयेन वर्तन्ते बालाः । शठे शाठ्येनैव व्यवहर्तव्यम् । सपत्नीजने शकुन्तला प्रियसखीवृत्तिं करोति ।

६ पितरौ बालकेषु स्निह्यतः । गुरवश्छात्रेषु स्निह्यन्ति । विवेकशीले नृपे प्रजा अनुरक्ता भवन्ति । बौद्धा दण्डनीत्याम् अनादृता—अनादरा वाभवन् । हरिभजने रतिं कुर्यात् । मास्तु जडविषयेऽभिलाषः ।

७ उद्यम एव नृणामभ्युदये कारणं भवति ।

८ क्षत्रकर्मणि नियुक्ता बहवो जनाः शिवनृपेण । साम्राज्यस्य प्रभुत्वं युज्यते शिवनृपे । उपपन्नं—युक्तरूपं वा सच्छीलं शिवनृपे ।

९ राज्यभारं रामचन्द्रे आरोप्य—संस्थाप्य वा दशरथो विश्रान्तिमनुभवितुमैच्छत् । वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे । सचिवे न्यस्तो राज्यभारो नृपेण ।

१० शठे नृशंसे च न कदापि विश्वसेत् ।

११ क्षत्रकर्मणि कुशलः—व्यापृतः—आसक्तः—तत्परः—व्यग्रः—निपुणः—शौण्डः—पटुः—प्रवीणः—पण्डितः—धूर्तः—कितवो वा अभिमन्युः ।

१२ निद्रायां ( निद्रया वा ) उत्सुकं—प्रसितं मनः ।

१३ कस्मिन्नपि पूजार्हे मुनौ अपराद्धा शकुन्तला । अपराद्धा शकुन्तला कस्यापि पूजार्हस्य मुनेः वा ।

१४ बाणो मृदुनि मृगशरीरे न पात्यः । शस्त्रमनागसि न प्रहर्तव्यम् । क्षत्रिया ब्राह्मणेषु न प्रवीराः ।

---

# अष्टाविंशः पाठः ।

## चन्द्रोदयवर्णनम् ।



ततः स मभ्यङ्गतमंशुमन्तं
ज्योत्स्नावितानं महदुद्वमन्तम् ।
ददर्श धीमान् दिवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १ ॥
लोकस्य पापानि विनाशयन्तं
महोदधिं चापि समेधयन्तम् ।

भूतानि सर्वाणि विराजयन्तं
ददर्श शीतांशुमथाभियान्तम् ॥ २ ॥

या भाति लक्ष्मीर्भुवि मन्दरस्था
तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥ ३ ॥



हंसो यथा राजतपञ्जरस्थः
सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थ-
श्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥ ४ ॥

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो
महाचलः श्वेत इवोच्चशृङ्गः ।

हस्तीव जाम्बूनदबद्धश्टङ्गो
रराज चन्द्रः परिपूर्णश्रृङ्गः ॥ ५ ॥
विनष्टशीताम्बुतुषारपङ्को
महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को
रराज चन्द्रो भगवाञ्शशाङ्कः ॥ ६ ॥
शिलातलं प्राप्य यथा मृगेन्द्रो
महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्र-
स्तथा प्रकाशो विरराज चन्द्रः ॥ ७ ॥
प्रकाशचन्द्रोदयनष्टदोषः
प्रवृद्धरक्षःपिशिताशदोषः ।
रामाभिरामेरितचित्तदोषः
स्वर्गप्रकाशो भगवान् प्रदोषः ॥ ८ ॥

[ वाल्मीकिरामायणे ]

---

**परीक्षणम्**—केन कदा च दृष्टश्चन्द्रमाः । को रसः प्रधानोऽस्मिन् काव्ये । के श्लोका रम्यतमा भान्ति । कस्माच्च कारणात् । केनोपमितश्चन्द्रः स्थाने स्थाने । कुत्रकुत्रस्था कान्तिश्चन्द्रे विललास इति तृतीये श्लोके वर्णितम् । कीदृशं विशेषणपदं प्रयुक्तं भवति स्थाने स्थाने द्वितीये श्लोके । तेषामौचित्यं दर्शयत । षष्ठे श्लोके शशाङ्कस्य विशेषणानामभिप्रायो वाच्यताम् । अस्मिन् काव्ये 'यमकाः' 'अनुप्रासाः' इत्यादयः शब्दालङ्कारा बहुविधाः सन्ति । तेषामुदाहरणानि विचिनुत ।

**काव्यवृत्तम्**—अस्मिन् काव्ये उपेन्द्रवज्रा वृत्तम् । लक्षणादिकं तु प्रथमपाठे द्रष्टव्यम् ।

चन्द्राङ्कमुद्दिश्य कविकल्पना—

अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे।
इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥ १ ॥

---

# नवविंशः पाठः ।

## भगवद्भक्तः ।



कदाचिन्नारदो भगवन्तं श्रीवासुदेवमुपेत्य पप्रच्छ । भगवन् को वा भवतः परमः प्रेमास्पदं च भक्त इति । भगवांस्तु तन्नारदस्य वचनमाकर्ण्य नूनमयमात्मानमेव मे परमं भक्तं मन्वान इदानीमवलेपमावहतीति निश्चिन्वानः प्राह । वत्स, विद्यते स एको मे परमप्रियो भक्तो य एव मामेकान्ततः प्रीणयति । यदि तु कामयसे तं द्रष्टुं तदा गत्वा भूवलयं कृतार्थीकुरुष्व चक्षुरात्मीयम् । तत्र च विदिशायां नाम नगर्यां निवसति कृषीवलोत्तंसो भद्रदत्त इति । स एव मे परमो भक्त इत्यवगच्छेति ।

नारदस्तु तच्छ्रुत्वा विस्मिततमो भूमण्डलं प्रतस्थे । गत्वा च विदिशां प्रत्यक्षीचकार भगवता निर्दिष्टं पुरुषम् । स किल प्रतिप्रभातं शुचौ देशे समासीनः प्रेमभरमन्थरेण चेतसा क्षणमात्रं भगवन्तं स्मरति प्रणमति च । ततश्च कृषिकर्मणि व्यापृतो न तु पुनर्भगवन्तं स्मरति । तमवलोकमानस्तु नारदः ‘अहो किमत्र प्रत्यक्षीकर्तव्यं, का चात्र भक्तिर्नाम । अहो परिहासशीलता भगवतो वासुदेवस्य’ इति स्वगतमेव

वदन् वैकुण्ठं प्राप । तं च प्रत्यागतमालोक्य भगवान् प्राह । वत्स नारद, अपि गतवानसि भूवलयम् । कच्चित्प्रत्यक्षीकृतस्त्वया भद्रदत्तो नाम स मे प्रियतमो भक्त इति । नारदस्तु प्रत्यवदत् । भगवन् दृष्टो मया भवन्निर्दिष्टो भक्तो नैव तु कश्चित्तत्र विशेष उपलब्ध इति ।

तन्निशम्य जलपूरितमेकं पात्रमादाय भगवान्नारदमब्रूत । भद्र गृहीत्वैतत् त्रिः प्रदक्षिणीकुरु पुरोवर्त्येतदायतनम् । तथा पुनरवधीयतां यथा नैकोऽपि जलबिन्दुरधस्तात्स्खलिष्यतीति । नारदोऽपि तदाकर्ण्य यथाज्ञापयति भगवानित्यभिधाय गृहीतपात्रो बिन्दुस्खलनभीत्या तदेकतानमना आयतनं परितस्त्रिर्बभ्राम । प्रत्यागतं च तं श्रीभगवानगदत् । वत्स अपि प्रदक्षिणीकृतं भवतायतनमिति ।

**नारदः**—अथ किम् ।

**भगवान्**—तद्ब्रूहि प्रदक्षिणीकुर्वता भवता कतिवारं स्मृतोऽहमिति ।

**नारदः**—भगवन्, यत्सत्यं नैकदाप्यहं भवन्तमस्मार्षम् ।

**भगवान्**—( विहस्य ) वत्स, यदि क्षुद्रतमेऽपि कर्मणि व्यापृतेन भवताहं न स्मर्य्ये तदा कथं वा नानाविधैः संसारक्लेशैः सन्त्रस्यद्भिर्दिवानिशं तेषु तेषु कर्मस्वासक्तैः स्मरणीयोऽहम् । तद्ब्रवीतु तावद्भवानेव सत्येवं यः पुरुष एकाग्रेण चेतसा नियतकालं मां स्मरति स किं मया भक्तोत्तमेषु गणनीय आहोस्विन्नेति ।

तदाकर्ण्य नारदः सलज्जमधोमुखोऽतिष्ठत् ।

[ संस्कृतचन्द्रिकायाम् ]

---

**प्रश्नाः**—नारदस्य वचनं श्रुत्वा किमजानाद् भगवान् विष्णुः ? कुत्रासीत् स परमो भक्तः ? कीदृशी तस्य भक्तिः ? तं भक्तं दृष्ट्वा किमवदन्नारदः स्वगतम् ? ततः

किं कर्तुमादिशद् भगवान्नारदम्? आयतनं प्रदक्षिणीकुर्वता नारदेन किमर्थं भगवत्स्मरणं न कृतम्? कथं च भगवता नारदस्यावलेपपरिहारः कृतः?

**शब्दप्रयोगाः**—आस्पदम् । मन्वानः । एकान्ततः । प्रत्यक्षीकृतम् । उपलब्धम् । कतिवारम् । व्यापृतम् । आहोस्वित् । कच्चित् । ( एते शब्दा वाक्येषु प्रयोक्तव्याः । )

**समासाः**—प्रेमभरमन्थरेण । कृषीवलोत्तंसः । जलपूरितम् । गृहीतपात्रः । एकतानमनाः । सलज्जम् । ( एतेषां विग्रहान् कृत्वा नामानि कथयत । )

**कथान्तरम्**—श्रीकृष्णेन कदाचिदर्जुनस्य गर्वपरिहारः कृतः । सा कथा संक्षेपेण लिख्यताम् ।

---

# त्रिंशः पाठः ।

## शकुन्तला-पुत्रः ।



**राजा**—( निमित्तं सूचयित्वा )

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १ ॥

( नेपथ्ये )

मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् ।

**राजा**—( कर्णं दत्वा ) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । ( शब्दानुसारेणावलोक्य, सविस्मयम् ) अये, को नु खल्वयमबुध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ २ ॥

[ ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । ]

**बालः**—जृम्भस्व सिंह, दन्तांस्ते गणयिष्ये ।

**प्रथमा**—अविनीत, किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त, वर्धते ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

**राजा**—किं नु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति ।

**द्वितीया**—एषा खलु केसरिणी त्वां लङ्घयिष्यति यदि तस्याः पुत्रकं न मुञ्चसि ।

**बालः**—अहो बलीयः खलु भीतोऽस्मि । ( इत्यधरं दर्शयति । )

**राजा**—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ ३ ॥

**प्रथमा**—वत्स, मुञ्चैनं बालमृगेन्द्रम् । अपरं क्रीडनकं ते दास्यामि ।

**बालः**—कुत्र । देहि तत् । ( इति हस्तं प्रसारयति । )

**राजा**—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते ।

**द्वितीया**—सुव्रते, न शक्य एष वाङ्मात्रेण विरमयितुम् । गच्छ त्वम् । मदीयोटजे वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति तमस्योपहर ।

**प्रथमा**—तथा । ( इति निष्क्रान्ता । )

**बालः**—अनेनैव तावत् क्रीडिष्यामि । ( इति हसति । )

**राजा**—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।

अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ४ ॥

**तापसी**—भवतु । मामयं न गणयति । ( पार्श्वमवलोक्य ) कोऽत्र ऋषिकुमाराणाम् । ( राजानमवलोक्य ) भद्र, एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहणेन डिम्भलीलया बध्यमानं बालमृगेन्द्रम् ।

**राजा**—( उपगम्य सस्मितम् ) अयि भो महर्षिपुत्र, किमिदमाश्रमविरुद्धं प्रक्रान्तं त्वया ।

[ प्रविश्य मयूरहस्ता तापसी ]

**तापसी**—सर्वदमन, शकुन्तलावण्यं पश्य ।

**बालः**—( सदृष्टिक्षेपम् ) कुत्र वा ममाम्बा ।

**उभे**—नामसादृश्येन वञ्चितो मातृवत्सलः ।

**द्वितीया**—वत्स, अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

**राजा**—( आत्मगतम् ) किं वा शकुन्तलेत्यस्य मातुराख्या ।

**बालः**—मातः, रोचते म एष मयूरः ।

**प्रथमा**—( विलोक्य सोद्वेगम् ) अहो रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते ।

**राजा**—अलमलमावेगेन । नन्विदमस्य सिंहशावविमर्दात् परिभ्रष्टम् । ( इत्यादातुमिच्छति । )

**उभे**—मा खल्विदमवलम्ब्य । कथं गृहीतमनेन । ( इति विस्मयविभ्रान्ते परस्परमवलोकयतः । )

**राजा**—किमर्थं प्रतिषिद्धाः स्मः ।

**प्रथमा**—शृणोतु महाराजः । एषापराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वापरो भूमिपतितां न गृह्णाति ।

**राजा**—अथ यदि गृह्णाति ।

**प्रथमा**—ततस्तं सर्पो भूत्वा दशति ।

**राजा**—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

**उभे**—अनेकशः ।

[ राजा कुमारं परिष्वजते । ]

**बालः**—मुञ्च माम् । यावन्मातुः सकाशं गच्छामि ।

**राजा**—पुत्रक, मया सहैव मातरमभिनन्दिष्यसि ।

**बालः**—मम खलु तातो दुष्यन्तो न त्वम् ।

**राजा**—( सस्मितम् ) एष विवाद एव प्रत्याययति ।

[ शाकुन्तले ]

---

**प्रश्नाः**—कोऽसौ मनोरथो दुष्यन्तस्य ? कस्मात्कारणादभूमिरियमविनयस्येति दुष्यन्तेनोक्तम् ? कीदृशं सिंहशिशुमाकर्षति स बालः ? किमर्थं च । तं बालकं दृष्ट्वा को भावः समुत्पन्नो दुष्यन्तस्य मनसि ? स कुमारश्चक्रवर्तिलक्षणोपेत इति नृपेण कथं ज्ञातम् ? कथं स कुमारः स्वमातरं स्मरति ? कीदृशी सा औषधिः ?

**परीक्षणम्**—( १ ) सर्वदमनस्य बालस्वभावो यत्र यत्र स्फुटं दृश्यते तानि स्थलानि निर्दशयत । ( २ ) केन क्रमेण दुष्यन्तः सर्वदमनं स्वपुत्रमिति निश्चयेनाभिज्ञातवान् । ( ३ ) चतुर्थे श्लोके को रसो विद्यते । बालकस्य काश्चेष्टाः पितरौ प्रीणयन्ति ।

**शब्दप्रयोगाः**—आशंस् । अभूमिः । स्निह् । क्रीडनकम् । स्पृह् । गण् । रुच् । सोद्वेगम् । प्रत्याययति ।

---

# एकत्रिंशः पाठः ।

## यक्षमन्दिरम् ।



तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥ १ ॥

वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ २ ॥

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्या प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ ३ ॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरबकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥ ४ ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।

ताले शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ ५ ॥

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ ६ ॥

गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ७ ॥

[ मेघदूते ]

---

**प्रश्नाः**—दूरात् कैश्चिह्नैर्गृहं लक्ष्यते ? अनन्तरं किं पश्येन्मेघः ? पश्चात् समीपमागत्य किमागच्छेत् तस्य दृष्टिपथम् ? कुत्र उपविशति स मयूरः ? द्वारोपान्ते किमालिखितं भवति ? केन कारणेन क्षामच्छायं तद्भवनम् ?

**परीक्षणम्**—को रसः प्रधानोऽस्मिन् काव्ये । यो मेघायैतत् सर्वं कथयति तस्य कीदृशो मनोभावः स्फुटं दृश्यते । के श्लोका मधुरतमा अर्थगौरवाद् भाषासौन्दर्याद् वा । द्वितीये श्लोके 'हंसा मानसं न ध्यास्यन्ति' इति वचनेन किं सूचितम् । कानि विशेषणपदानि अर्थपोषणं साधयन्ति । षष्ठे श्लोके चरमा पङ्क्तिः किं सूचयति। तया यत् किमपि उत्प्रेक्षितं तद् विशदीकुरुत । सप्तमे श्लोके किं पदं गुर्वर्थं विद्यते। तेन किमुत्प्रेक्षितं भवति। तस्य विशेषणपदानामौचित्यं प्रदर्शयत ।

**काव्यवृत्तम्**—अस्य 'मन्दाक्रान्ता'–वृत्तस्य गणान् कथयत । अपि काव्यरसस्य सदृशमेतद्वृत्तम्? ( मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्। )

**अर्थसम्बन्धः**—आभाणकस्योदाहरणं तेनैवाङ्केन प्रदर्शयत ।

| | |
|---|---|
| ( १ ) सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् । | (   ) सचिवपदे स्थापितो दुर्मतिः कलशो राज्यस्य महतीं हानिमकरोत् । |
| ( २ ) अधिगन्तुमनश्वरं यशो म्रियते यो मनुजः स जीवति । | (   ) बहुधा पीडितोऽपि प्रह्लादो हरिभक्तिं न तत्याज । |
| ( ३ ) प्रासादशिखरस्थोऽपि काको न गरुडायते । | (   ) नारदस्य समागमेन साधुतां प्राप्तो वाल्मीकिः । |
| ( ४ ) क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे । | (   ) रामवनवासेन अयोध्या उदासीनाऽभवत् । |
| ( ५ ) न निश्चितार्थाद् विरमन्ति धीराः । | (   ) स्वामिकार्यार्थं सिंहदुर्गे धारातीर्थे पतितो वीरस्तानाजिर्जयति । |
| ( ६ ) महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः । | (   ) वानरसहायोऽपि रामो रावणमजयत् । |

---

# द्वात्रिंशः पाठः ।

## चारुदत्तकृतमार्यकस्य रक्षणम् ।



( ततः प्रविशति चारुदत्तो विदूषकश्च । )

**विदूषकः**—भोः, पश्य पश्य पुष्पकरण्डकजीर्णोद्यानस्य सश्रीकताम् ।

**चारुदत्तः**—वयस्य, एवमेतत् । तथा हि ।

वणिज इव भान्ति तरवः पण्यानीव स्थितानि कुसुमानि ।
शुल्कमिव साधयन्तो मधुकरपुरुषाः प्रविचरन्ति ॥ १ ॥

**विदूषकः**—भोः, इदमसंस्काररमणीयं शिलातलमुपविशतु भवान् ।

**चारुदत्तः**—( उपविश्य ) वयस्य, चिरयति वर्धमानकः ।

**विदूषकः**—भणितो मया वर्धमानको वसन्तसेनां गृहीत्वा लघु लघ्वागच्छेति ।

**चारुदत्तः**—तत्किं चिरयति ।

किं यात्यस्य पुरः शनैः प्रवहणं तस्यान्तरं मार्गते
भग्नेऽक्षे परिवर्तनं प्रकुरुते छिन्नोऽथ वा प्रग्रहः ।
वर्त्मन्युज्झितदारुवारितगतिर्मार्गान्तरं याचते
स्वैरं प्रेरितगोयुगः किमथवा स्वच्छन्दमागच्छति ॥ २ ॥

( प्रविश्य गुप्तार्यकप्रवहणस्थः । )

**चेटः**—यातं गावौ यातम् ।

**आर्यकः**—( स्वगतम् )

नरपतिपुरुषाणां दर्शनाद्भीतभीतः
सनिगडचरणत्वात्सावशेषापसारः ।
अविदितमधिरूढो यामि साधोस्तु याने
परभृत इव नीडे रक्षितो वायसीभिः ॥ ३ ॥

अहो नगरात्सुदूरमपक्रान्तोऽस्मि । तत्किमस्मात्प्रवहणादवतीर्य वृक्षवाटिकागहनं प्रविशामि । उताहो प्रवहणस्वामिनं पश्यामि । अथवा कृतं वृक्षवाटिकागहनेन । अभ्युपपन्नवत्सलः खलु तत्रभवानार्यचारुदत्तः श्रूयते । तत्प्रत्यक्षीकृत्य गच्छामि ।

स तावदस्माद्व्यसनार्णवोत्थितं
निरीक्ष्य साधुः समुपैति निर्वृतिम् ।
शरीरमेतद्गतमीदृशीं दशां
धृतं मया तस्य महात्मनो गुणैः ॥ ४ ॥

**चेटः**—इदं तदुद्यानम् । यावदुपसर्पामि । ( उपसृत्य । ) आर्य मैत्रेय ।

**विदूषकः**—भोः, प्रियं ते निवेदयामि । वर्धमानको मन्त्रयति । आगतया वसन्तसेनया भवितव्यम् ।

**चारुदत्तः**—प्रियं नः प्रियम् ।

**विदूषकः**—दास्याःपुत्र, किं चिरायितोऽसि ।

**चेटः**—आर्य मैत्रेय, मा कुप्य । यानास्तरणं विस्मृतमिति कृत्वा गतागतं कुर्वंश्चिरायितोऽस्मि ।

**चारुदत्तः**—वर्धमानक, परिवर्तय प्रवहणम् । सखे मैत्रेय, अवतारय वसन्तसेनाम् ।

**विदूषकः**—किं निगडेन बद्धावस्याः पादौ येन स्वयं नावतरति । ( उत्थाय प्रवहणमुद्घाट्य ) भोः, न वसन्तसेना । वसन्तसेनः खल्वेषः ।

**चारुदत्तः**—वयस्य, अलं परिहासेन । न कालमपेक्षते स्नेहः । अथवा स्वयमेवावतारयामि । ( इत्युत्तिष्ठति । )

**आर्यकः**—( दृष्ट्वा ) अये, अयमेव प्रवहणस्वामी । न केवलं श्रुतिरमणीयो दृष्टिरमणीयोऽपि । हन्त रक्षितोऽस्मि ।

**चारुदत्तः**—( प्रवहणमधिरुह्य दृष्ट्वा च ) अये, तत्कोऽयम् ।

करिकरसमबाहुः सिंहपीनोन्नतांसः
पृथुतरसमवक्षास्ताम्रलोलायताक्षः ।
कथमिदमसमानं प्राप्त एवंविधो यो
वहति निगडमेकं पादलग्नं महात्मा ॥ ५ ॥

ततः को भवान् ।

**आर्यकः**—शरणागतो गोपालप्रकृतिरार्यकोऽस्मि ।

**चारुदत्तः**—किं घोषादानीय योऽसौ राज्ञा पालकेन बद्धः ।

**आर्यकः**—अथ किम् ।

**चारुदत्तः**—

विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः ।
अपि प्राणानहं जह्यां न तु त्वां शरणागतम् ॥ ६ ॥

( आर्यको हर्षं नाटयति । )

**चारुदत्तः**—वर्धमानक, चरणान्निगडमपनय ।

**चेटः**—यदार्य आज्ञापयति । ( तथा कृत्वा ) आर्य, अपनीतानि निगडानि ।

**आर्यकः**—स्नेहमयान्यन्यानि दृढतराणि दत्तानि ।

**विदूषकः**—सङ्गच्छस्व निगडानि । एषोऽपि मुक्तः । साम्प्रतं वयं व्रजिष्यामः ।

**चारुदत्तः**—धिक्शान्तम् ।

**आर्यकः**—सखे चारुदत्त, अहमपि प्रणयेनेदं प्रवहणमारूढः । तत्क्षन्तव्यम् ।

**चारुदत्तः**—अलङ्कृतोऽस्मि स्वयंग्राहप्रणयेन भवता ।

**आर्यकः**—अभ्यनुज्ञातो भवता गन्तुमिच्छामि ।

**चारुदत्तः**—गम्यताम् ।

**आर्यकः**—भवतु, अवतरामि ।

**चारुदत्तः**—सखे, नावतरितव्यम् । प्रत्यग्रापनीतसंयमनस्य भवतो लघुसञ्चारा गतिः । सुलभपुरुषसञ्चारेऽस्मिन् प्रदेशे प्रवहणं विश्वासमुत्पादयति । तत्प्रवहणेनैव गम्यताम् ।

**आर्यकः**—यथाह भवान् ।

**चारुदत्तः**—

क्षेमेण व्रज बान्धवान्

**आर्यकः**—

ननु मया लब्धो भवान् बान्धवः

**चारुदत्तः**—

स्मर्तव्योऽस्मि कथान्तरेषु भवता

**आर्यकः**—

स्वात्मापि विस्मर्यते ।

**चारुदत्तः**—

त्वां रक्षन्तु पथि प्रयान्तममराः

**आर्यकः**—

संरक्षितोऽहं त्वया

**चारुदत्तः**—

स्वैर्भाग्यैः परिरक्षितोऽसि

**आर्यकः**—

ननु हे तत्रापि हेतुर्भवान् ॥ ७ ॥

**चारुदत्तः**—यत्नोद्यते पालके महती रक्षा वर्तते, तच्छीघ्रमपक्रामतु भवान् ।

**आर्यकः**—एवं पुनर्दर्शनाय । ( इति निष्क्रान्तः । )

**चारुदत्तः**—

कृत्वैवं मनुजपतेर्महद् व्यलीकं

स्थातुं हि क्षणमपि न प्रशस्तमस्मिन् ।

मैत्रेय क्षिप निगडं पुराणकूपे
पश्येयुः क्षितिपतयो हि चारदृष्ट्या ॥ ८ ॥

तदेहि । गच्छावः । ( इति निष्क्रान्तः । )

[ मृच्छकटिके ]

---

**प्रश्नाः**—कुत्र विचरतो विदूषकचारुदत्तौ ? कस्यागमनमपेक्षितं ताभ्याम् ? कस्यामवस्थायां वर्तत आर्यकः ? केन हेतुना चारुदत्तं द्रष्टुमागतः स आर्यकः । किमर्थं विस्मितश्चारुदत्तः प्रवहणस्थं जनं दृष्ट्वा ? आर्यकं दृष्ट्वा किमकरोत् स चारुदत्तः ?

**स्वभावपरीक्षणम्**—विदूषकस्य चारुदत्तस्य च स्वभावं तैस्तैरुदाहरणैर्वर्णयत ।

**शब्दप्रयोगाः**—१ अस्मिन् पाठे विध्यर्थ-कृदन्तानि दर्शयत तेषामर्थं च तत्र तत्र विशदीकुरुत । २ प्रशस्तम्—निगडम्—निर्वृतिः—रक्षा—इत्येते शब्दा यस्मिन्नर्थेऽत्र प्रयुक्तास्तं तं विस्तरेण दर्शयत ।

**परीक्षणम्**—१ वर्धमानकस्यागमने केऽन्तराया उद्वीक्षिताश्चारुदत्तेन । २ केनोपमितमुद्यानं प्रथमे श्लोके । सा पूर्णोपमा कथं भवति तद्विस्तरेण दर्शयत ।

**वृत्तम्**—अष्टमश्लोकस्य वृत्तं प्रहर्षिणी । ( त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् । )

| म | न | ज | र | ग |
|---|---|---|---|---|
| कृत्वैवं | मनुज | पतेर्म | हद् व्यली | कम् |

---

# त्रयस्त्रिंशः पाठः ।

## धर्मे सत्यस्य माहात्म्यम् ।



अथात्र वेदप्रतिपाद्यस्य धर्मस्य मूलतत्त्वं सत्यमस्ति । तथाहि शतपथब्राह्मणे पठ्यते । 'स नैव व्यभवत् तच्छ्रेयोरूपमत्यसृजत धर्मम् । तदेतत्

क्षत्रस्य क्षत्रं यद्धर्मस्तस्मात्परं नास्ति । अथो अबलीयान् बलीयांसमाशंसते धर्मेण यथा राज्ञैष्टं यो वै स धर्मः सत्यम्'इत्यादि । ऐतरेयब्राह्मणेऽपि—'ऋतं वाव दीक्षा सत्यं दीक्षा तस्मादीक्षितेन सत्यमेव वदितव्यं' इति । यद्यपि मनुष्येषु सर्वदा सत्यमेव वदितुं को नाम शक्नुयात् भ्रमप्रमादादिदोषेण कदाचिदप्यसत्यभाषणं प्रसज्येत । तथापि यो वै स्वयमनुभूतमेव भाषितुमभ्यस्येत्तस्य प्रायशो नानृतभाषणं स्यात् । मनुष्यशरीरे हि सत्यरूपं चक्षुर्देवैर्निहितम् । अत एव कञ्चिदर्थं भाषमाणं प्रत्याह लोकः । 'अयि भो यदात्थ, दृष्टवानसि तत्' । तत् दृष्टवानस्मीति यदा स ब्रूते तदा श्रद्दधते जना नान्यथेति । स्पष्टश्चायमर्थोऽपि ब्राह्मण एवानुपदं प्रदर्शितः । एवं च 'यज्ञा नानाविधा दानं व्रतानि नियमा यमाः । योगो ज्ञानं चैवमाद्यं रूपं सत्यस्य वै बहु' ॥ तथा च ऋग्वेदे श्रूयते । 'ऋतस्य दृढा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि' इति । ऋतस्य सत्यरूपस्य धर्मस्य वपूंषि शरीराणि पुरूणि बहूनि सन्ति । तानि धरुणानि पततां जनानां धारकाणि दृढा दृढानि चन्द्रा आह्लादकानि च सन्तीति तदर्थः । तस्माद्यो मनुष्यः सत्यात् प्रमाद्यति सोऽधर्मेणाभिभूतो महति सङ्कटे पतति । ततस्तस्य सङ्कटान्मुक्तये सत्यावलम्बं विना नान्यः कश्चिदुपायोऽस्ति । यो हि सत्यं परिपालयन् वर्तेत स नूनमुत्तमां पदवीमारोहेत् ।

[ आर्यविद्यासुधाकरे ]

---

**प्रश्नाः**—किं नाम धर्मस्य मूलतत्त्वम्? तस्य माहात्म्यं कथं वर्णितं ब्राह्मणग्रन्थेषु? केन कारणेन जनो व्यवहारेष्वसत्यभाषण उद्युक्तो भवति? सत्यासत्ययोरन्तरं कथं ज्ञायते जनैः? सत्यस्य कानि रूपाणि वेदेषु वर्णितानि?

**शब्दप्रयोगाः**—श्रेयोरूपम्-दीक्षा-धरुणानि-चन्द्रा इत्येतेषां पदानां स्थाने स्थाने यदौचित्यं दृश्यते तत् स्पष्टीकुरुत ।

**दृष्टान्तः**—केनापि सचिवेन कस्मायपि राज्ञे सत्यासत्ययोरन्तरं स्फुटं प्रदर्शितम् । सा कथा विस्तरेण कथ्यताम् ।

व्यवहारेषु सत्यभाषणं श्रेयस्करं कथं भवति तदुदाहरणेन दर्शयत ।

---

# चतुस्त्रिंशः पाठः ।

## वसन्तवर्णनम् ।



नवाभिलाषस्य विलासिजन्तोरभीष्टसिद्ध्यर्थमिव प्रकृत्या ।
समीरितो भूमितलं वसन्त ऋतोरधीशः स्वयमागतोऽस्ति ॥ १ ॥

स मन्मथो नूतनवेशरम्यस्तं सत्वरं पृष्ठत एव याति ।
किं नाम मित्रं परमप्यनुक्तं न साहचर्यं भजते प्रियस्य ॥ २ ॥

श्रीखण्डशैलो द्युमणेर्वियोगान्निःश्वासकल्पं पवनं जहाति ।
को नाम तूष्णीं सुहृदो जडोऽपि वियोगपीडासहने समीशः ॥ ३ ॥

विभाकरोऽसौ मलयाचलस्य निःश्वाससम्पर्कभयेन किं नु ।
नवीनदेशेक्षणकौतुकाद्वा द्रुतं द्रुतं गच्छति तीव्रतापः ॥ ४ ॥

यो दक्षिणस्यां दिशि मन्दतेजाः प्रवर्तते स्म प्रखरप्रतापः ।
कौबेरकाष्ठामुपगम्य सोऽत्र स्थानोपयोगः खलु तत्र हेतुः ॥ ५ ॥

हिमाद्रिमुक्तो मिहिरोऽथवाऽस्मिन् हिमालयं याति हिमं विहन्तुम् ।
सचेतनो नाम समीहते को ग्रहीतुमस्मिन् प्रतिशात्रवं न ॥ ६ ॥

कूजत्पतङ्गास्तरवः किमस्मिन्नान्दोलितैः पल्लवबाहुभिः स्वैः ।
ऋतोरधीशं हिमतीव्रशत्रुं समाह्वयन्तीव समादरेण ॥ ७ ॥

वनस्थली पुष्पितवल्लरीभिर्विहङ्गनादैः श्रवणाभ्युपायैः ।
गुञ्जद्द्विरेफैः रमणीव भाति सयौवना भूषणभूषितेव ॥ ८ ॥

षडङ्घ्रयस्ते मधुमोदमत्ताः पुष्पान्तरं स्वादुतरं श्रयन्ति ।
पिकाः सुकण्ठाः सहकारशाखामाश्रित्य गायन्ति कलं सुखेन ॥ ९ ॥

महीरुहाः पल्लवपुष्पवन्तः पुष्पाणि नित्यं समधूनि भान्ति ।
मधूनि पेयानि च भृङ्गसार्थैर्भृङ्गाः समग्राः ससुखा भवन्ति ॥ १० ॥

अस्मिन् सकामा युवतिर्न का स्यात् को न प्रदेशो रमणीयताढ्यः ।
का वल्लरी पल्लविता न रम्या किं फुल्लपुष्पं न मुदं ददाति ॥ ११ ॥

रक्तारविन्दं सुषमाविभातं सरोगतं धूमभभृङ्गयुक्तम् ।
अग्निस्फुलिङ्गोच्चयरेणुरम्यं जानन्ति वह्निं स्मरकिङ्करौघाः ॥ १२ ॥

सुवर्णपुष्पेण वनं क्वचित् स्यात् सुवर्णवर्णं नवकिंशुकेन ।
नवारुणाभं ननु कुन्दपुष्पैः शुभ्रं सुनीलं नवनीलपुष्पैः ॥ १३ ॥

स कुसुममधुपाभिर्वल्लरीभिः समन्ता-
दधिगतसुषमोऽसौ रम्यदृश्यो वसन्तः ।
भवतु कमलमालालङ्कृतो नीरचुम्बि-
मलयनगनभस्वाञ्चारुवेशः सुखाय ॥ १४ ॥

[ सहृदयानन्दे ]

---

**प्रश्नाः**—किमर्थं वसन्तं जना 'ऋतोरधीश' इति वदन्ति ? कथं वहति पवनस्तदा ? कथं च तपन्ति रविकिरणाः ? कां दिशं प्रति चलति सूर्यो वसन्ते ? तेन किं भवति हिमाचलस्य ?

**परीक्षणम्**--कं भावं मनसि समुत्पादयति काव्यस्यास्य पठनम् । के श्लोका रम्यतमा वर्तन्तेऽर्थदृष्टया भाषादृष्टया च । अत्र कविर्यत् पश्यति शृणोति यच्चानुभवति तन्निवेदयत । तृतीये सप्तमे च श्लोके भूतार्थं कथमन्यथा प्रदर्शयति कविः । 'निःश्वास'—'समादरेण' इति पदाभ्यां किं सूचयति । दशमे श्लोके किं वर्णितं कविना । सा स्वभावोक्तिरिति कथं ज्ञायते ।

**समासाः**--नूतनवेशरम्यः, निःश्वाससम्पर्कभयेन, मन्दतेजाः, कूजत्पतङ्गाः श्रवणाभ्युपायैः, समधूनि, नवारुणाभम्, अधिगतसुषमः--इत्यादीनां विग्रहान् कृत्वा नामानि कथयत ।

**शब्दप्रयोगाः**—द्वादशे चतुर्दशे च श्लोके यानि विशेषणपदानि सन्ति तेषामौचित्यं प्रदर्शयत ।

**काव्यवृत्तम्**—अस्य काव्यस्य वृत्तं कथयित्वा गणादिकान् दर्शयत ।

---

# पञ्चत्रिंशः पाठः ।

## श्रीकृष्णदौत्यम् ।



**दुर्योधनः**—भो दूत,

धर्मात्मजो वायुसुतश्च भीमो भ्रातार्जुनो मे त्रिदशेन्द्रसूनुः ।
यमौ च तावश्विसुतौ विनीतौ सर्वे सभृत्याः कुशलोपपन्नाः ॥ १ ॥

**वासुदेवः**—सदृशमेतद् गान्धारीपुत्रस्य । अथ किमथ किम् । कुशलिनः सर्वे । भवतो राज्ये शरीरे बाह्याभ्यन्तरे च कुशलमनामयं च पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादयः पाण्डवाः ।

अनुभूतं महद् दुःखं सम्पूर्णः समयः स च ।
अस्माकमपि धर्म्यं यद् दायाद्यं तद् विभज्यताम् ॥ २ ॥ इति ।

**दुर्योधनः**—कथं कथं दायाद्यमिति । भोः,

वने पितृव्यो मृगयाप्रसङ्गतः

कृतापराधो मुनिशापमाप्तवान् ।
तदाप्रभृत्येव स दारनिःस्पृहः
परात्मजानां पितृतां कथं व्रजेत् ॥ ३ ॥

**वासुदेवः**—पुराविदं भवन्तं पृच्छामि—
विचित्रवीर्यो विषयी विपत्ति
क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष
लभेत राज्यं जनकः कथं ते ॥ ४ ॥

मा मा भवान्,
एवं परस्परविरोधविवर्धनेन
शीघ्रं भवेत् कुरुकुलं नृप नामशेषम् ।
तत् कर्तुमर्हति भवानपकृष्य रोषं
यत् त्वां युधिष्ठिरमुखाः प्रणयाद् ब्रुवन्ति ॥ ५ ॥

**दुर्योधनः**—भो दूत, न जानाति भवान् राज्यव्यवहारम् ।
राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ।
काङ्क्षा चेन्नृपतित्वमाप्तुमचिरात् कुर्वन्तु ते साहसं
स्वैरं वा प्रविशन्तु शान्तमतिभिर्जुष्टं शमायाश्रमम् ॥ ६ ॥

**वासुदेवः**—भोः सुयोधन, अलमलं बन्धुजने परुषमभिधातुम् ।
पुण्यसञ्चयसंप्राप्तामधिगम्य नृपश्रियम् ।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद् विफलश्रमः ॥ ७ ॥

**दुर्योधनः**—भो दूत,
श्यालं तव गुरोर्भूपं कंसं प्रति न ते दया ।
कथमस्माकमेवं स्यात् तेषु नित्यापकारिषु ॥ ८ ॥

**वासुदेवः**—अलं तन्मद्दोषतो ज्ञातुम् ।

कृत्वा पुत्रवियोगार्तां बहुशो जननीं मम ।
वृद्धं स्वपितरं बद्ध्वा हतोऽयं मृत्युना स्वयम् ॥ ९ ॥

**दुर्योधनः**—सर्वथा वञ्चितस्त्वया कंसः । अलमात्मस्तवेन । न शौर्यमेतत् । पश्य—

जामातृनाशव्यसनाभितप्ते रोषाभिभूते मगधेश्वरेऽथ ।
पलायमानस्य भयातुरस्य शौर्यं तदेतत् क गतं तवासीत् ॥ १० ॥

**वासुदेवः**—भोः सुयोधन, देशकालावस्थापेक्षि खलु शौर्यं नयानुगामिनाम् । इह तिष्ठतु तावदस्मद्गतः परिहासः । स्वकार्यमनुष्ठीयताम् ।

कर्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः ।
सम्बन्धो बन्धुभिः श्रेयान् लोकयोरुभयोरपि ॥ ११ ॥

**दुर्योधनः**—

देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत् ।
पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥ १२ ॥

**वासुदेवः**—( आत्मगतम् )

प्रसाद्यमानः साम्नाऽयं न स्वभावं विमुञ्चति ।
हन्त संक्षोभयाम्येनं वचोभिः परुषाक्षरैः ॥ १३ ॥

( प्रकाशम् ) भोः सुयोधन, किं न जानीषेऽर्जुनस्य बलपराक्रमम् ?

**दुर्योधनः**—न जाने ।

**वासुदेवः**—भोः श्रूयताम्—

कैरातं वपुरास्थितः पशुपतिर्युद्धेन सन्तोषितो
वह्नेः खाण्डवमश्नतः सुमहती वृष्टिः शरैश्छादिता ।
देवेन्द्रार्तिकरा निवातकवचा नीताः क्षयं लीलया
नन्वेकेन तदा विराटनगरे भीष्मादयो निर्जिताः ॥ १४ ॥

अपि च । तवापि प्रत्यक्षमपरं कथयामि ।

ननु त्वं चित्रसेनेन नीयमानो नभस्तलम् ।
विक्रोशन् घोषयात्रायां फाल्गुनेनैव मोक्षितः ॥ १५ ॥

किं बहुना ।

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज ।
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥ १६ ॥

**दुर्योधनः**—कथं कथं हरिष्यन्ति हि पाण्डवाः ।

प्रहरति यदि युद्धे मारुतो भीमरूपी
प्रहरति यदि साक्षात् पार्थरूपेण शक्रः ।
परुषवचनदक्ष त्वद्वचोभिर्न दास्ये
तृणमपि पितृभुक्ते वीर्यगुप्ते स्वराज्ये ॥ १७ ॥

**वासुदेवः**—भोः कुरुकुलकलङ्कभूत, अयशोलुब्ध, वयं किल तृणान्तराभिभाषकाः ?

**दुर्योधनः**—भो गोपालक, तृणान्तराभिभाष्यो भवान् ।

अवध्यां प्रमदां हत्वा हयं गोवृषमेव च ।
मल्लानपि सुनिर्लज्जो वक्तुमिच्छसि साधुभिः ॥ १८ ॥

**वासुदेवः**—भोः सुयोधन, ननु क्षिपसि माम् ।

**दुर्योधनः**—ननु सत्यमेवैतत् ।

**वासुदेवः**—गच्छामि तावत् ।

**दुर्योधनः**—गच्छ गच्छ पशुखुरोद्धतरेणुरूषिताङ्गो व्रजमेव । विफलीकृतः कालः ।

**वासुदेवः**—एवमेवास्तु । न वयमनुक्तसन्देशा गन्तुमिच्छामः । तदाकर्ण्यतां युधिष्ठिरस्य सन्देशः ।

**दुर्योधनः**—आः, अभाष्यस्त्वम् ।

अहमवधृतपाण्डरातपत्रो द्विजवरहस्तधृताम्बुसिक्तमूर्धा ।
अवनतनृपमण्डलानुयात्रैः सह कथयामि भवद्विधैर्न भाषे ॥ १९ ॥

**वासुदेवः**—न व्याहरति किल मां सुयोधनः । भोः,

शठ बान्धवनिःस्नेह काक केकर पिङ्गल ।
त्वदर्थाद् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥ २० ॥

भो भो राजानः, गच्छामस्तावत् ।

**दुर्योधनः**—कथं यास्यति किल केशवः । दुःशासन, दुर्मर्षण, दुर्मुख, दुर्बुद्धे, दुष्टेश्वर, दूतसमुदाचारमतिक्रान्तः केशवो बध्यताम् । कथमशक्ताः । दुःशासन, न समर्थः खल्वसि ।

करितुरगनिहन्ता कंसहन्ता स कृष्णः
पशुपकुलनिवासादानुजीव्यानभिज्ञः ।
हतभुजबलवीर्यः पार्थिवानां समक्षं
स्ववचनकृतदोषो बध्यतामेष शीघ्रम् ॥ २१ ॥

अयमशक्तः । मातुल, बध्यतामयं केशवः । कथं पराङ्मुखः पतति । भवतु, अहमेव पाशैर्बध्नामि ।

( पाशमुद्यम्योपसर्पति । )

**वासुदेवः**—कथं मवितुकामो मां किल सुयोधनः । भवतु, सुयोधनस्य सामर्थ्यं पश्यामि ।

( विश्वरूपमास्थितः । )

**दुर्योधनः**—भो दूत,

सृजसि यदि समन्ताद् देवमायाः स्वमायाः
प्रहरसि यदि वा त्वं दुर्निवारैः सुरास्त्रैः ।
हयगजवृषभाणां पातनाज्जातदर्पो
नरपतिगणमध्ये बध्यसे त्वं मयाद्य ॥ २२ ॥

आः, तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो ह्रस्वत्वं केशवस्य । आः, तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो दीर्घत्वं केशवस्य । कथं न दृष्टः केशवः । अयं केशवः । सर्वत्र मन्त्रशालायां केशवा भवन्ति । किमिदानीं करिष्ये । भवतु, दृष्टम् । भो भो राजानः, एकैकैकः केशवो बध्यताम् । कथं स्वयमेव पाशैर्बद्धाः पतन्ति राजानः । साधु, भो जृम्भक, साधु ।

मत्कार्मुकोदरविनिःसृतबाणजालै-
विद्धं क्षरत्क्षतजरञ्जितसर्वगात्रम् ।
पश्यन्तु पाण्डुतनयाः शिबिरोपनीतं
त्वां बाष्परुद्धनयनाः परिनिःश्वसन्तः ॥ २३ ॥

( निष्क्रान्तः । )

[ दूतवाक्ये ]

---

**वृत्तम्**—अस्मिन् पाठे वर्तमानानां श्लोकानां सलक्षणं सोदाहरणं वृत्तानि कथयत ।

**प्रश्नाः**—वासुदेवं दृष्ट्वा किं पृच्छति दुर्योधनः प्रथमम् ? किमर्थं पाण्डवेभ्यो राज्यार्धं दातुं नेच्छति दुर्योधनः ? को दोषो दर्शितः कृष्णस्य दुर्योधनेन । कुत्र दृष्टः पराक्रमोऽर्जुनस्य ? केनोद्भूतः कलहः कृष्णसुयोधनयोः ? किं कर्तुमुद्यतो दुर्योधनः कृष्णस्य ? कथमात्मानं रक्षितवान् वासुदेवः ?

**नाट्यम्**—एष संवादश्छात्राभ्यां छात्रगणाभ्यां वा नाट्यताम् ।

**शब्दप्रयोगाः**—दायाद्यम्—परात्मजाः—परुषम्—परिहासः—पिष्टपेषणम्—कैरातम्—गाम्—गोपालक—जृम्भक । [ एते शब्दाः केष्वर्थेषु प्रयुक्ता अस्मिन् संवादे । तेष्वधोरेखितयोः शब्दयोः सिद्धिः स्पष्टीक्रियताम् । ]

**कथावर्णनम्**—पञ्चदशे श्लोके या कथा निरूपिता सा विस्तरेण लिख्यताम् ।

**सारकथनम्**—येन क्रमेण कृष्णदुर्योधनयोः संवादोऽभवत् स संक्षेपतः कथ्यताम् ।

---

# षड्त्रिंशः पाठः ।

## भार्गव-दाशरथ्योः सङ्ग्रामः ।



**लक्ष्मणः**—( सकौतुकम् )

मौर्वी धनुस्तनुरियं च बिभर्ति मौञ्जीं
बाणाः कुशाश्च विलसन्ति करे शिताग्राः ।
धारोज्ज्वलः परशुरेष कमण्डलुश्च
तद्वीरशान्तरसयोः किमयं विकारः ॥ १ ॥

आर्य, किं पुनरिदं ब्रह्मक्षत्रवर्णात्मकं चित्रमिव स्फुरति ?

**रामः**—वत्स, न विदितं ते ? नन्वयं स भगवान् भार्गवो येन क्रौञ्चमहीधरशिखरं विद्धं छिन्नं च यस्य क्रीडाकुठारेण हैहयपतेरुद्दामदोःकाननम् ।

**लक्ष्मणः**—तर्हि विस्मयनीयशीलो भगवान् ।

**रामः**—विस्मयनीयशीलानां शिखामणिरिति वक्तव्यम् । ( उपसृत्य ) भगवन्, एष सानुजस्य मे प्रश्रयरमणीयः प्रणामः ।

**जामदग्न्यः**—समरविजयी भूयाः ।

**रामः**—भगवन्, अनुगृहीतोऽस्मि ।

**भार्गवः**—( स्वगतम् )

( सकरुणम् ) रामे चन्द्राभिरामे विनयवति शिशौ किं प्रकुप्यातिमात्रं
( सक्रोधम् ) हुं चापं चन्द्रमौलेश्चपलमतिरसाविक्षुभञ्जं बभञ्ज ।
( पुनः सानुक्रोशम् ) बाला वैधव्यदीक्षां जनकनृपसुता नार्हतीयं मदस्त्राद्
( पुनः सामर्षम् ) आः शान्तो मे कुठारः कथमयमधुना रेणुकाकण्ठशत्रुः ॥ २ ॥

( प्रकाशम् ) दाशरथे, इयमसौ मे त्वयि समुदाचारानुसारिणी वाग्वृत्तिरेव।

**रामः**—( विहस्य ) मनोवृत्तिस्तु कीदृशी ?

**भार्गवः**—चण्डीशकार्मुकविमर्दकयोस्तव बाह्वोर्दर्पं कठिनेनानेन कुठारेण शातयामि।

**रामः**—भगवन्, निग्रहानुग्रहयोः स्वाधीनोऽयं जनः। परं ते कोपबीजं ज्ञातुमिच्छामि।

**भार्गवः**—अहो दर्पान्धता। ननु रे न भग्नं किं त्वया जगद्गुरु-शरासनम् ?

**रामः**—भगवन्, अलीकलोकवार्तया निरपराधे मयि मुधा कोप-कलङ्कितोऽसि।

**भार्गवः**—तत् किं स्वस्ति हरकार्मुकाय ?

**रामः**—नहि नहि।

**भार्गवः**—तत् कथं निरपराधोऽसि।

**रामः**—

मया स्पृष्टं न वा स्पृष्टं कार्मुकं पुरवैरिणः।
भगवन्नात्मनैवेदमभज्यत करोमि किम्॥ ३॥

**भार्गवः**—आः, कथं रे चन्दनदिग्धं नाराचं निधाय हृदयं मे शीतलयसि ? तदलमनेन। ( कुठारमुद्यम्य ) हे राम हरकार्मुकभङ्गसञ्जात-पातक, तवैष कठोरधारो निष्करुणः कुठारः कण्ठं विशतु। तत् अवीरो भव।

**रामः**—

हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा।
संपश्यामो ध्रुवमिह सुखं प्रेतभर्तुर्मुखं वा।
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः॥ ४॥

**भार्गवः**—( सामर्षम् ) कथं मां प्रणतिपात्रं मुनिमात्रं मन्यसे ? कथं क्षत्रियजातिगर्वितो ब्राह्मणजातिं तृणाय मन्यसे ? स एव जामदग्न्यः खल्वहं यः क्षत्रकण्ठविगलदुष्णासृजोऽञ्जलीन् समर्प्य पितॄंस्तोषयामास ।

**रामः**—हे भृगुतिलक, आत्मनो यशोवित्तं मुधा मा हारय ।

**भार्गवः**—कथं रे हारयिष्यामि ? ( विमृश्य ) अथवा—

किं नाम वाग्डम्बरपण्डितेषु
युष्मासु वाणीः प्रचुराः प्रयुञ्जे ।
बाणान् रिपुप्राणहरान् मदीयान्
सर्वेऽपि यूयं सहिताः सहध्वम् ॥ ५ ॥

**रामः**—नन्वहमेव सहिष्ये ।

**भार्गवः**—रे तव गुरुरपि कौशिको मन्नाराचभयात् पद्मासनं भगवन्तं ब्राह्मीं तनुं ययाचे ।

**रामः**—कथं गुरूनप्यधिक्षिपसि ? तदतःपरं न सहिष्ये । ( साटोपम् ) अये जामदग्न्य, तत् कुलिशकठिनं कोदण्डं रामेणैवानेन भग्नम् । भवतु तत् त्रैयक्षं वा नारायणीयं वा । मम दोर्विलासस्तन्न गणयति ।

**भार्गवः**—साधु रे क्षत्रियपोत साधु, यत् किल जामदग्न्य-नाम्नश्चण्डधाम्नः पुरतः खद्योत इव विद्योतसे ।

**रामः**—अलमलं वाग्डम्बरेणानेन । क्रियतां यथाभिलषितम् ।

**भार्गवः**—यदि शक्तोऽसि तदेहि । समरक्षमां क्षमामवतरावः ।

( इति निष्क्रान्तौ । )

[ प्रसन्नराघवे ]

---

**प्रश्नाः**—किं किमासीत् परशुरामस्य हस्तयोः शरीरे च ? कः पराक्रमः कृतस्तेन ? कीदृश आशीर्वादो जामदग्न्यस्य ? किमर्थं कुपितो भार्गवो रामचन्द्राय ? किमर्थं रामचन्द्रः प्रथमं भार्गवेण सह योद्धुं नोद्यतोऽभवत् ? अनन्तरं केन कारणेन क्रुद्धो रामचन्द्रः प्रवीरोऽभवत् ?

**नाट्यम्**—एष संवादश्छात्रैः साभिनयं नाटयितव्यः।

**परीक्षणम्**—१ प्रथमे श्लोके कैः पदैर्वीरशान्तरसौ निर्दिष्टौ। २ द्वितीये श्लोके किमर्थं पर्यायेण भावान्तरं नाटयति भार्गवः। ३ चतुर्थे श्लोके कानि पदानि रमणीयानि सन्ति। कथं चाभिप्रायस्तैः पोषितो भवति। ४ 'न वयं ब्राम्हणेषु प्रवीराः' इति रामवचनेन किमर्थं क्रुद्धो जामदग्न्यः।

**स्वभाववर्णनम्**—भार्गवरामचन्द्रयोः स्वभावौ स्थाने स्थाने कथं प्रदर्शितौ कविना तद्विशदीक्रियताम्।

**वृत्तम्**—द्वितीयश्लोकस्य वृत्तं स्रग्धरा। ( म्रभ्नैर्यानां त्रयेण त्रिमुनियति-युता स्रग्धरा कीर्तितेयम्। )

| म | र | भ | न | य | य | य |
|---|---|---|---|---|---|---|
| रामे चं | द्राभिरा | मे विन | यवति | शिशौ किं | प्रकुप्या | तिमात्रम्। |

चतुर्थश्लोकस्य वृत्तं शिखरिणी। ( रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी। )

इतरेषां श्लोकानां वृत्तानि कथयत।

---

# सप्तत्रिंशः पाठः।

## अनुशासनम्।



वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्।

मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि।

यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि ।

ये के चास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वयासने न प्रश्वसितव्यम् ।

श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामाः स्युः यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः ।

अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामाः स्युः यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः । इति ।

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवं चैतदुपास्यम् ।

[ तैत्तिरीयारण्यके ]

---

**प्रश्नाः**—एष उपदेशः केन कस्मै वा कृतः ? कस्मान्न प्रमदितव्यं छात्रेण गृहस्थेन च ? के प्रतिदिनं वन्द्या गृहस्थेन ? किमनुकरणीयं छात्रेण गृहस्थेन च ? किं कथं वा देयं गृहस्थेन ? कथं वर्तितव्यं गृहस्थेनेतरैः सह ?

**परीक्षणम्**--१ पुरा भरतवर्षे कथं विद्यार्जनमकुर्वन् बालाः । २ कस्मिन् समये गुरुरेनमुपदेशमकरोत् । ३ कीदृशोऽनुरागो गुरोश्छात्रेषु । कीदृशश्चादरो विद्यार्थिनां गुरुषु ।

**शब्दप्रयोगाः**--प्रमदः – अनवद्यानि – प्रश्वसितव्यम् – विचिकित्सा – अलूक्षाः सम्मर्शिनः–इत्येते शब्दाः केष्वर्थेषु प्रयुक्ताः । संप्रति वाङ्मयेषु प्रायो न ते दृश्यन्ते । अस्मिन् पाठे किमन्यद्दृश्यते यत्संप्रति संस्कृतभाषायां नियम-विरुद्धं भवेत् ।

---

# अष्टात्रिंशः पाठः ।

## उपदेशपञ्चकम् ।



वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयता-
मात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥
सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् ।
सद्विद्वानुपसृप्यतां प्रतिदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥
वाक्यार्थश्च विचार्यतां श्रुतिशिरः पक्षः समाश्रीयतां
दुस्तर्कात् सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ।
ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहंमतिरुज्झतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥
क्षुद्व्याधिश्च चिकित्स्यतां विधिवशात् प्राप्तेन सन्तुष्यतां
स्वाद्वन्नं न तु याच्यतां प्रतिदिनं भिक्षौषधं भुज्यताम् ।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यता-
मौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥ ४ ॥
एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥

[ श्रीशङ्कराचार्याष्टकेषु ]

---

**काव्यवृत्तम्**—शार्दूलविक्रीडितम् । ( सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् । )

| म | स | ज | स | त | त | ग |
|---|---|---|---|---|---|---|
| वेदो नि | त्यमधी | यतां त | दुदितं | कर्म स्व | नुष्ठीय | ताम् |

**प्रश्नाः**—किमध्ययनं हितावहं मानवस्य ? कीदृशं कर्म जनैः कार्यं त्याज्यं वा ? केषां सङ्गो विधेयः ? कस्य ध्यानं सर्वदानुष्ठेयम् ? कीदृशमन्नं स्वीकरणीयं मुमुक्षुणा ? कीदृशं सुखमनुत्तमं शाश्वतं च विद्यते ?

**परीक्षणम्**—कस्मै कृत एष उपदेशः शङ्कराचार्यैः । को रसः प्रधानोऽस्मिन् काव्ये । किं पदं बहुधा प्रयुक्तं तत्र । कश्च तस्य पठनस्य परिणामो भवति मनसि । पञ्चसु श्लोकेषु ये विषयाः क्रमेण वर्णितास्तान् संक्षेपतः कथयत । तेषां परस्परानुसन्धानं विस्तरेण प्रदर्शयत ।

**चरितकथनम्**—श्रीशङ्कराचार्यचरितं संक्षेपतो वर्णयत । तत्र चास्मिन् काव्ये वर्णितो जीवनक्रमो दृश्यते न वेति कथयत ।

---

# नवत्रिंशः पाठः ।

## पार्वतीविवाह-सम्भारवर्णनम्



**कञ्चुकी**—आज्ञप्तोऽस्मि सकलकुलाचलचक्रवर्तिना हिमवता यथा—शिलाधर, पूर्वेद्युरेव परमेश्वरप्रहिताः सारुन्धतीकाः सप्तर्षयः समागत्य लब्धवराया वत्साया दिनमिदं विवाहमङ्गलयोग्यमकल्पयन् । तद्भवता चौषधिप्रस्थवासिनः पौराः पुरं परिष्क्रियतामिति नियोक्तव्या इति । तत्प्रभोर्नियोगमनुतिष्ठामि । ( इति परिक्रम्य सर्वतो विलोक्य ) भो भोः पौराः,

सन्नह्यन्तां विचित्राः प्रतिभवनमिह श्रेणयस्तोरणाना-
मुन्नेष्यन्तां समन्ताद्गगनतललिहः केतनानां पताकाः ।

संसिच्यन्तां पटीरद्रवभरितजलैर्वीथयो मुक्तपुष्पाः
संप्राप्तोऽसावुमायाः परिणयदिवसो विश्वमाङ्गल्यहेतुः ॥ १ ॥

( आकाशे ) किं ब्रूथ—भवद्वचनात्प्रागेव सर्वमस्माभिर्द्विगुणमाचरितमिति । ( सर्वतो निर्वर्ण्य सहर्षम् ) अहो, अस्मदादेशात्प्रागेव प्रवृत्तमहोत्सवं नगरम् । तथा हि—

एषा चन्दनमालिका विरचिता चूतप्रवालैर्नवै
रम्भास्तम्भपरिष्कृतेषु भवनद्वारेषु संलक्ष्यते ।
आमन्द्रध्वनयः क्वणन्ति मुरजा मूर्छन्ति तन्त्रीस्वराः
सिञ्जानैर्मणिभूषणैस्तत इतो नृत्यन्ति वाराङ्गनाः ॥ २ ॥

इतश्च,

उत्सर्पदागरवधूपपरम्पराभिः
प्रादुर्भवत्यभिनवो जलदागमोऽयम् ।
उन्नद्धतोरणमणिप्रभया स्फुरन्त्या
सञ्जायते च शतमन्युशरासनश्रीः ॥ ३ ॥

तदेनं प्रवर्तमानं पुरपरिष्कारं प्रभवे निवेदयामि ।

[ ततः प्रविशति विविक्तस्थानमधिवसन् हिमवान् । ]

**हिमवान्**—

पूर्वं नारदसूचनेन महता चन्द्रार्धचूडामणि-
र्जामातेत्यभवत् पुनस्तदनु तत्सम्प्राप्तिराकाङ्क्षिता ।
लब्धोऽसौ तपसा मया दिनमिदं तस्याश्च वैवाहिकं
जातो विघ्नगणानतीत्य कृतिनामद्याहमग्रेसरः ॥ ४ ॥

**शिलाधरः**—( उपसृत्य ) जयतु स्वामी ।

**हिमवान्**—किं पुरपरिष्कारः प्रवर्तितो भवता ?

**शिलाधरः**—स्वामिन्, अस्मदीयोऽयमुत्सव इति प्रत्येकं पौराणामभिमानः। कथं परिहीयते पुरपरिष्कारः। सर्वं द्विगुणमाचरितं पौरैः।

**हिमवान्**—शिलाधर, किं सर्वे पर्वताः पार्वतीपरिग्रहमङ्गलं द्रष्टुमागताः।

**शिलाधरः**—स्वामिन्नवधार्यताम्।

भूपङ्केरुहकर्णिकायिततनुर्मेरुः सुराणां प्रियो
योक्त्रीभूतभुजङ्गराजकषणस्निग्धोपलो मन्दरः।
विन्ध्यो व्योमनि भानुमालिपदवीजङ्घालशृङ्गावलिः
साकं सम्प्रति गन्धमादनमुखैस्त्वां द्रष्टुमभ्यागताः॥ ५ ॥

**हिमवान्**—अथ कैलासः किं करोति ?

**शिलाधरः**—स्वामिन्, स खलु जामातृपक्षस्थितेनैव सार्धमागमिष्यति।

**हिमवान्**—युज्यते। अथ विश्वावसुप्रभृतय आगता गन्धर्वाः सवधूगणाः ?

**शिलाधरः**—

आतोद्यपाणयः सर्वे गन्धर्वाः सवधूगणाः।
उपवीणयितुं प्राप्ता मानयन्तस्तवोत्सवम्॥ ६ ॥

**हिमवान्**—आगताः किमप्सरसः सार्धममरैः ?

**शिलाधरः**—श्रूयताम्।

विद्युद्वल्लीवितानव्यतिकरसुषमां व्योम्नि विस्तारयन्त्यः
कान्त्या नीलोत्पलानां श्रियमिव नयनैर्दिङ्मुखैर्दर्शयन्त्यः।
ज्योत्स्नालक्ष्मीं दिवापि स्मितरुचिविसरैर्विष्वगुत्पादयन्त्यः
सर्वाः स्वर्वारयोषा सममसरगणैरागताः प्रीतये नः॥ ७ ॥

**हिमवान्** —यद्येव मन्तःपुरं गत्वा भवान् पार्वती सम्यगलङ्क्रियतामित्यभिधत्ताम् ।

**शिलाधरः**—यथादिष्टं स्वामिना तथा सर्वं सम्पादयिष्यामि । ( इति निष्क्रान्तः । )

[ पार्वतीपरिणये ]

---

**प्रश्नाः**—किमाज्ञप्तं हिमवता ? किमर्थं नगरी परिष्क्रियते ? कञ्चुकिना किं दृष्टं नगर्याम् ? ततस्तेन किं कृतम् ? कृतिनामहमग्रेसरः इति कस्मात् कारणान्मन्यते हिमवान् ? के के पर्वताः पार्वतीविवाहमङ्गलं द्रष्टुमागताः ? केऽन्ये प्राप्ता औषधिप्रस्थम् ? किं कर्तुमादिष्टः शिलाधरो हिमवता ?

**वर्णनम्**—केषु केषु समारम्भेषु नगरी समलङ्क्रियते । अलङ्करणप्रकारांश्च विस्तरेण वर्णयत ।

**शब्दप्रयोगाः**—उपसर्गयुक्तानामेतेषां धातूनामर्थाः कथं भिद्यन्ते तदुदाहरणैर्दर्शयत ।—कृ, विद्, स्था, नी, हा ।

**समासाः**—लब्धवरा । प्रतिभवनम् । स्ववारयोषाः । चन्द्रार्धचूडामणिः । परिग्रहमङ्गलम् । सवधूगणाः ।

**परीक्षणम्**—( १ ) अस्मिन् पाठे कः श्लोको रुचिरतमः किमर्थं च तद्विस्तरेण कथ्यताम् । ( २ ) अस्मिन् पाठे पौराणां मनोवृत्तिर्यैः पदैः सूचिता भवति तेषामौचित्यं स्वारस्यं च दर्शयत ।

**वृत्तम्**—अस्मिन् पाठे वर्तमानानां श्लोकानां सलक्षणानि वृत्तानि कथयत ।

---

# चत्वारिंशः पाठः ।

## पार्वतीविवाहवर्णनम् ।



( नेपथ्ये )

जम्भारे भव पार्श्वतः परिसरेणायाहि लक्ष्मीपते
वेधाः स्वस्त्ययनान्यधीष्ट मुनयः प्रब्रूत रौद्रीमृचम् ।
चन्द्रार्कावपि चामरे विधुनुतां छत्रीभवाहीश्वर
प्रष्ठा रुद्रगणाः प्रयात पवन स्पन्दस्व मन्दोदयः ॥ १ ॥

**हिमवान्**—भगवन्नारद, कोऽयं देवानामिव कोलाहलः श्रूयते ?

**नारदः**—सकलजगदुत्पत्तिस्थितिप्रलयैरुद्घुष्यमाणमहिमा चराचरगुरुस्ते जामाता चटुलविवाहवेषमास्थाय सह देवगणैरित एवाभिवर्तते । अयं कलकलस्तत्पुरःसरनन्दिनः प्रोत्सारणायाः । तद्भवानर्घ्यपाणिः प्रत्युद्यातु भगवन्तमिन्दुशेखरम् ।

( ततः प्रविशति गृहीतविवाहवेषः शङ्करो देवलोकश्च । )

**शङ्करः**—( शार्ङ्गिणं प्रति ) अमरावतीमतिक्रम्य शोभते पुरमिदमोषधिप्रस्थम् ।

**शार्ङ्गी**—किं परिहीयते महेन्द्रान्महिमहेन्द्रः ।

**शङ्करः**—( अवलोक्य ) अभ्युद्गच्छति मामगाधिराजः । तद्वाहनादवरुह्य यास्यामः । (तथा करोति ।)

**हिमवान्**—

अचार्मणानामपि दूरमक्ष्णामकर्तृकाणां वचसामभूमिम् ।
जामातरं लब्धुममुं गिरीशं कियन्ति पुण्यानि मया कृतानि ॥ २ ॥

( इत्युपसर्पति । )

**शङ्करः**—( विलोक्य )

अतिगुरुचरणक्रमैर्वितन्वन्नवनमितोन्नमितस्थलामिवोर्वीम् ।
विनयमुपदिशन्निवात्मभाजामयमुपसर्पति मामगाधिराजः ॥ ३ ॥

( हिमवानर्घ्यमुपहरति । शङ्करः सप्रणामं गृह्णाति । )

( हिमवान् सलज्जं मुखमवनमयति । )

( जामातरं पुरस्कृत्य हरिविरञ्चिमुखाः परिक्रामन्ति । )

**ब्रह्मा**—भगवन्, कुत्र वैवाहिकी वेदी ?

**हिमवान्**—इत इतो भवन्तः ।

( सर्वे उपसर्पन्ति । )

**बृहस्पतिः**—हिमवन्, प्रत्यासन्नो मुहूर्तः ।

( ततः प्रविशति जयाविजयाभ्यां सह पार्वती । )

**पार्वती**—अद्य खलु मे मनोरथकल्पद्रुमः फलं दर्शयति ।

**जया**—( सस्मितम् ) हला पार्वति, एतावत्तव प्रियसख्यावपि आवां जाते ।

**पार्वती**—( सासूयम् ) हला विजये, किमेषा भणति ?

**विजया**—हला पार्वति, एषा सरसालापपेशलत्वं दर्शयति । ( इत्युपसर्पति । )

**ब्रह्मा**—( शार्ङ्गिणं प्रति ) भगवन्, सर्वे देवाः सह भूतगणैर्यथास्थानमुपविशन्तु ।

( सर्वे तथा कुर्वन्ति । )

**हिमवान्**—अस्मत्पक्षाः कुलपर्वताश्च कैलासेन समं वामपार्श्वमुपविशन्तु ।

( कुलपर्वताश्च तथा कुर्वन्ति । )

**शङ्करः**—( पार्वतीं विलोक्य आत्मगतम् )

एषा विशेषरम्या विवाहवेषेण मोहनेन दृशा ।
प्रतिभाति मानसे मे मदनसहस्राणि कल्पयन्तीव ॥ ४ ॥

**बृहस्पतिः**—भो शङ्कर, वध्वा सहास्यां वेदिकायां प्राङ्मुखो वर्तेथाः ।

( शङ्करः पार्वत्या सहोपविशति । )

**शङ्करः**—( आत्मगतम् )

नन्दितनयनचकोरा नवनवलावण्यकौमुदीविसरा ।
उत्कूलयति मनो मे जलधिं सैषा कलेव चान्द्रमसी ॥ ५ ॥

**बृहस्पतिः**—( अग्निमुपसमाधाय ) शङ्कर, त्वदीयेन पाणिना पार्वत्याः पाणिमवलम्बस्व । ( शङ्करस्तथा करोति । )

( पार्वती पुलकोद्भेदमभिनयति । )

**शङ्करः**—( आत्मगतम् )

आभाति बालिकेयं पाणिस्पर्शेन पुलकितावयवा ।
अभिनववसन्तसङ्गादाविर्मुकुलेव बालचूतलता ॥ ६ ॥

**ब्रह्मा**—वधूवरौ पावकं प्रदक्षिणां कुरुताम् । ( उभौ तथा कुरुतः । )
( पार्वती शङ्करमवलोकयति । शङ्करः प्रत्यवलोकयति । पार्वती दृष्टिं परावर्तयति । )

**शङ्करः**—( आत्मगतम् )

अवलोकनाय लोला दृष्टिरियं मृगदृशो निवृत्तिमती ।
गत्वा प्रति प्रवाहं राजति शफरी निवर्तमानेव ॥ ७ ॥

( बृहस्पतिः पार्वत्याः पाणिना लाजाञ्जलिं कारयति । )

( पार्वती धूमाक्रमेण वैक्लव्यं निरूपयति । )

**शङ्करः**—( आत्मगतम् )

प्रस्विन्नगण्डफलकच्युतपत्रलेखं
धूमानुषङ्गगलिताञ्जनपाटलाक्षम् ।
म्लायद्वसन्तकुसुमं मुखमायताक्ष्या-
श्चित्ते ममार्पयति कामपि रागमुद्राम् ॥ ८ ॥

**बृहस्पतिः**—शङ्कर, पार्वत्याः पादकमलं पाणिभ्यामश्मानमारोपयतु भवान् ।

( शङ्करः स्मयमानमुखस्तूष्णीं तिष्ठति । )

**कुलपर्वताः**—( ससम्भ्रमम् ) भगवन्, प्रमाणभूतेन पुरोधसा यदुच्यते तदनुष्ठीयताम् ।

**भूतगणाः**—( ससंरम्भम् ) कुलपर्वताः, कथमिव नियम्यते त्रिभुवननियन्ता नीललोहितः ।

**ब्रह्मा**—( सस्मितमुभयान्निवार्य ) सकलजननियामिका स्वतः-प्रमाणभूता श्रुतिरेव सम्यगित्थमभिदधाति । तद्यथोक्तमनुष्ठीयताम् ।

( शङ्करः संकुचिताभ्यां पाणिभ्यां पार्वत्याः पादकमलमश्मानमारोपयति । )

( बृहस्पतिः कर्मशेषं समापयन् वधूवरौ ब्रह्माणं प्रणमयति । )

**ब्रह्मा**—( हस्तमुद्यम्य )

सकलजगतां सवित्रोरनन्यसामान्यमस्तु वां प्रेम ।
भुवनभयभङ्गदक्षो भवतु कुमारोऽपि तारकध्वंसी ॥ ९ ॥

( इत्याशिषं प्रयुङ्क्ते । ) [ पार्वतीपरिणये ]

---

**प्रश्नाः**—नेपथ्ये केन प्रथमः श्लोकः पठ्यते ? कं कमुद्दिश्य स तद्वदति ? महेश्वरमायान्तं श्रुत्वा किं करोति हिमवान् ? किमर्थं शङ्करो वाहनादवरोहति ? किं करोति हिमवान् शङ्करं दृष्ट्वा ? कुत्रोपविष्टा देवाः कुलपर्वताश्च ? किमर्थं कुलपर्वतैर्भूतगणैश्च कोलाहलः कृतः ? कथं च स प्रशमितो ब्रह्मणा ?

**वर्णनम्**—( १ ) परिणयविधौ ये केऽप्याचारा अनुष्ठीयन्ते तेषां क्रमशः संक्षेपतश्च वर्णनं क्रियताम् । ( २ ) हिमवतः शङ्करस्य च स्वभाववर्णनं संक्षेपेण कुरुत ।

**साधितानि विशेषणपदानि**—

| | | | | | |
|---|---|---|---|---|---|
| विवाहः | — | वैवाहिकी । | ______ | — | पाराणिकः । |
| | — | धार्मिकः । | महेन्द्रः | — | ______ । |
| स्वभावः | — | | | — | नसर्गिकी । |
| | — | चार्मणम् । | उर्वी | — | । |

**वृत्तम्**—अस्मिन् पाठे वर्तमानानां श्लोकानां चरणानि गणमात्राभिर्विभज्य सलक्षणं वृत्तानि कथयत ।

---

# सङ्कीर्णपद्यानि ।



**श्रीगणेशः**—क्रोडं तातस्य गच्छन् विशदबिसधिया शावकं शीतभानो-
राकर्षन् भालवैश्वानरनिशितशिखारोचिषा तप्यमानः ।
गङ्गाम्भः पातुमिच्छन् भुजगपतिफणाफूत्कृतैर्दूयमानो
मात्रा सम्बोध्य नीतो दुरितमपनयेद्बालवेषो गणेशः ॥ १ ॥

**सरस्वती**—ज्योतिस्तमोहरमलोचनगोचरं तद्
जिह्वादुरासदरसं मधुनः प्रवाहम् ।
दूरे त्वचः पुलकबन्धि परं प्रपेदे
सारस्वतं किमपि कामदुहं रहस्यम् ॥ २ ॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ३ ॥

**शिवः**—स पातु वो यस्य जटाकलापे स्थितः शशाङ्कः स्फुटहारगौरः ।
नीलोत्पलानामिव नालपुञ्जे निद्रायमाणः शरदीव हंसः ॥ ४ ॥

एकान्ते द्विसमस्त्रिलोचन इति ख्यातश्चतुर्भिः स्तुतो
वेदैः पञ्चमुखः षडाननपिता सप्तर्षिभिर्वन्दितः ।
अष्टाङ्गो नवतुल्य आमरगणे वासो दशाशा दधत्
स्वश्चैकादश सोऽवतान्न विजितो यो द्वादशात्मांशुभिः ॥ ५ ॥

मौलौ किं नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं
किं नीलालकवेणिका मधुकरी किं भ्रूलता वीचिका ।

किं नेत्रे शफरौ किमु स्तनयुगं प्रेङ्खद्रथाङ्गद्वयं
साशङ्कामिति वञ्चयन् गिरिसुतां गङ्गाधरः पातु वः ॥ ६ ॥

धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुः
देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ ७ ॥

कस्त्वं शूली मृगय भिषजं नीलकण्ठः प्रियेऽहं
केकामेकां कुरु पशुपतिर्नैव दृश्ये विषाणे ।
स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवाया
गच्छाटव्यामिति गिरिजया निर्जितश्चन्द्रचूडः ॥ ८ ॥

**गङ्गा**—यन्नाम्नः प्रथमाक्षरं विजयते भानौ, द्वितीयाक्षरं
नित्यं नृत्यति सत्कवीन्द्रवदने, भूत्वान्त्यवर्णद्वयम् ।
रामो रावणमाजघान समरे, शम्भोः शिरःशालिनी
सा सर्वाक्षरमालिनी भवतु मे भाग्याय भागीरथी ॥ ९ ॥

**विष्णुः**—वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य ।
श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव ॥ १० ॥

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः ।
तवारविन्दारपदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥ ११ ॥

येनोत्थाप्य समूलमन्दरगिरिश्छत्रीकृतो गोकुले
राहुर्येन महाबलः सुररिपुः कार्यादशेषीकृतः ।
कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया
सोऽयं पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ १२ ॥

**रामः**—राज्यं येन पटान्तलग्नतृणवत्त्यक्तं गुरोराज्ञया

पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः ।
स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां
पायाद्वः स विभीषणाग्रजनिहा रामाभिधानो हरिः ॥ १३ ॥

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ १४ ॥

**कृष्णः**—कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं
नासाग्रे नवमौक्तिकं करतले वेणुः करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं सुविमलं कण्ठे च मुक्तावलिं
बिभ्रद्गोपवरैः समं विजयते गोपालचूडामणिः ॥ १५ ॥

## लक्ष्मीपार्वतीसंवादः

भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले
मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि ।
आर्ये मुञ्च विषादमाशु कमले नाहं प्रकृत्या चला
चेत्थं वै गिरिजासमुद्रसुतयोः सम्भाषणं पातु वः ॥ १६ ॥

**सूर्यान्योक्तयः**—खद्योतो द्योतते तावद् यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ १७ ॥

अजस्रं लसत्पद्मिनीवृन्दसङ्गं मधूनि प्रकामं पिबन्तं मिलिन्दम् ।
रविर्मोचयत्यब्जकारागृहेभ्यो दयालुर्हि नो दुष्टवदोषदर्शी ॥ १८ ॥

पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ
व्रजतु वरुणागारद्वारं प्रभाभिरनादृतः ।
तदपि तरणिर्दत्वा पादं शिरस्सु महीभृतां

दलिततिमिरव्रातः प्रातः पुनः सकृदेष्यति ॥ १९ ॥

दूरं यान्तु निशाचराः शशिकराः क्लेशं लभन्तान्तरा-
मुद्योतं कलयन्तु हन्त न चिरं खद्योतका द्योतले ।
ध्वान्तं ध्वंसमुपैतु हंसनिवहः पद्माकरे शाम्यतु
प्राचीपर्वतमौलिमण्डनमणिः सूर्यः समुज्जृम्भते ॥ २० ॥

**चन्द्रान्योक्तयः**—क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ।
उपैति मित्राद्यचन्द्रो युक्तं तन्मलिनात्मनः ॥ २१ ॥

वक्रोऽस्तु बाल्ये तदनु प्रवृद्धः कलङ्कवानस्तु जडोऽस्तु चन्द्रः ।
महेशमौलौ च पदं दधातु जायेत वन्द्यो विविधोपकारात् ॥ २२ ॥

जन्म क्षीरमहार्णवे सहभुवः श्रीपारिजातादयो
बिम्बं यस्य सुधामयं त्रिभुवनाधीशस्य मूर्ध्नि स्थितम् ।
इत्थं सर्वचराचरप्रियकरो यस्योदये चेद्भवेत्
सङ्कोचः कमलस्य दुष्कृतिरसौ निन्द्यो न ताराधिपः ॥ २३ ॥

**मेघान्योक्तिः**—गर्जन्नम्बु ददाति तच्च कणिकारूपेण यत्र क्वचिद्
वर्षाकालमपेक्ष्य दानसमये काष्ण्यं विधत्ते मुखे ।
पश्चात्पाण्डुरतामयेति लघुतामप्येति भूतस्ततः
श्रीमद्रामनृपालशेखरविभो दाता कियान् वारिदः ॥ २४ ॥

**सागरान्योक्तिः**—स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः
कल्याणिनी भवतु मौक्तिकशुक्तिमाला ।
प्राप्तं मया सकलमेव फलं पयोधे
यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ २५ ॥

**सिंहान्योक्तिः**—गम्यते यदि मृगेन्द्रमन्दिरे लभ्यते करिकपोलमौक्तिकम् ।
जम्बुकालयगतेन लभ्यते वत्स पुच्छखुरचर्मखण्डनम् ॥ २६ ॥

एणः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते
क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्दुरुर्धावति ।
निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया
हंहो सिंह विना त्वयाद्य विपिने कीदृग्दशा वर्तते ॥ २७ ॥

**गजान्योक्तिः**—पीतं यत्र हिमं पयः कवलिता यस्मिन् मृणालाङ्कुरा-
स्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तः श्रमः ।
धिक् तस्यैव जलानि पङ्किलयतः पाथोजिनीं मथ्नतो
मूलान्युत्खनतः करीन्द्र भवतो लज्जापि नो जायते ॥ २८ ॥

**वृक्षान्योक्तिः**—छायाभिः प्रथमं ततस्तु कुसुमैः पश्चात्फलैः स्वादुभिः
प्रीणात्येव तरुः पथीति पथिकैः श्रान्तैः सुखं स्थीयते ।
को जानाति यदत्र कोटरगतः प्रत्यग्रहालाहल—
ज्वालाजालकरालवक्त्रकुहरः कृष्णः फणी वर्तते ॥ २९ ॥

**कविकाव्यप्रशंसा**—ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये वा काव्येषु कीर्तिताः ॥ ३० ॥

ख्याता नराधिपतयः कविसंश्रयेण
राजाश्रयेण च गताः कवयः प्रसिद्धिम् ।
राज्ञा समोऽस्ति न कवेः परमोपकारी
राज्ञो न चास्ति कविना सदृशः सहायः ॥ ३१ ॥

चेतःप्रसादजननं विबुधोत्तमाना-
मानन्दि सर्वरसयुक्तमतिप्रसन्नम् ।
काव्यं खलस्य न करोति हृदि प्रतिष्ठां
पीयूषपानमिव वक्त्रविवर्ति राहोः ॥ ३२ ॥

हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं

शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात् ।
तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं
रुष्टैर्नीतस्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ ३३ ॥

प्रयच्छति चमत्कृतिं विरचनाविधौ चेतसः
सभासु पठितो भवत्यसमसाधुवादाप्तये ।
प्रथामुपगतस्तनोत्यतितरामुदारं यशो
न पुष्यति मनोरथं कमिव काव्यचिन्तामणिः ॥ ३४ ॥

**सज्जनप्रशंसा**—जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः
पराभ्युदयसुस्थिताः परविपत्तिखेदाकुलाः ।
महापुरुषसत्कथाश्रवणजातकौतूहलाः
समस्तदुरितार्णवप्रकटसेतवः साधवः ॥ ३५ ॥

स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः ।
त्रयमपि येषां सदृशं हृदयं वचनं तथाचारः ॥ ३६ ॥

आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने ।
छेदताडननिघर्षतापनैर्नान्यभावमुपयाति काञ्चनम् ॥ ३७ ॥

तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वशः ।
समुच्छ्रितानेव तरून् प्रबाधते महान् महत्स्वेव करोति विक्रमम् ॥ ३८ ॥

पात्रं पवित्रयति नैव गुणान् क्षिणोति
स्नेहं न संहरति नापि मलं प्रसूते ।
दोषावसानरुचिरश्चलतां न धत्ते
सत्सङ्गमः सुकृतसद्मनि कोऽपि दीपः ॥ ३९ ॥

**खलनिन्दा**—शमयति यशः क्लेशं सूते दिशत्यशिवां गतिं
जनयति जनोद्वेगायासं नयत्युपहास्यताम् ।

भ्रमयति मतिं मानं हन्ति क्षिणोति च जीवितं
क्षिपति सकलं कल्याणानां कुलं खलसङ्गमः ॥ ४० ॥

पात्रमपात्रीकुरुते दहति गुणान् स्नेहमाशु नाशयति ।
अमले मलं प्रयच्छति दीपज्वालेव खलमैत्री ॥ ४१ ॥

**सामान्यनीतिः**—लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्छशविषाणमासादये-
न्नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४२ ॥

वन्द्यान्निन्दति दुःखितानुपहसत्याबाधते बान्धवान्
शूरान् द्वेष्टि धनच्युतान् परिभवत्याज्ञापयत्याश्रितान् ।
गुह्यानि प्रकटीकरोति घटयन् यत्नेन वैराशयं
ब्रूते शीघ्रमवाच्यमुज्झति गुणान् गृह्णाति दोषान् खलः ॥ ४३ ॥

विनाप्यर्थैर्धीरः स्पृशति बहुमानोन्नतिपदं
परिष्वक्तोऽप्यर्थैः परिभवपदं याति कृपणः ।
स्वभावेनोद्भूतां गुणसमुदयावाप्तिविपुलां
द्युतिं सैंहीं न श्वा धृतकनकमालोऽपि लभते ॥ ४४ ॥

तेजस्विनि क्षमोपेते नातिकार्कश्यमाचरेत् ।
अतिनिर्मथनाद्वह्निश्चन्दनादपि जायते ॥ ४५ ॥

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ ४६ ॥

गच्छन् पिपीलिको याति योजनानां शतान्यपि ।
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥ ४७ ॥

चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।

न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ ४८ ॥

व्रजत्यधोऽधो यात्युच्चैर्नरः स्वैरेव कर्मभिः ।
खनितेव हि कूपस्य प्रासादस्येव कारकः ॥ ४९ ॥

यस्य जना न वदन्ति महत्त्वं नो समरे मरणं विजयं वा ।
न श्रुतदानमहाधनतां वा तस्य भवः कृमिकीटसमानः ॥ ५० ॥

सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ।
विद्यते न हि स कश्चिदुपायः सर्वलोकपरितोषकरो यः ॥ ५१ ॥

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढनिश्चयं च लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥ ५२ ॥

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥ ५३ ॥

प्राणानां परिरक्षणाय सततं सर्वाः क्रियाः प्राणिनां
प्राणेभ्योऽभ्यधिकं समस्तजगतां नास्त्येव किञ्चित् प्रियम् ।
पुण्यं तस्य न शक्यते गणयितुं यः पूर्णकारुण्यवान्
प्राणानामभयं ददाति सुकृती तेषामहिंसाव्रतम् ॥ ५४ ॥

याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ५५ ॥

लघीयः प्राज्यं वा फलमभिमतं प्राप्तुमनसा
निरीहेण स्थातुं, क्षणमपि न युक्तं मतिमता ।
कुलालो दण्डेन भ्रमयति न चेच्चक्रमनिशं
शरावः कुम्भो वा न हि भवति सत्यामपि मृदि ॥ ५६ ॥

क्वचिद् भूमौ शायी क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारी क्वचिदपि च मांसोदनरुचिः ।

क्वचित् कन्थाधारी क्वचिदपि विचित्राम्बरधरो
मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥ ५७ ॥

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ ५८ ॥

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ ५९ ॥

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ ६० ॥

अहितहितविचारशून्यबुद्धेः श्रुतिसमयैर्बहुभिर्बहिष्कृतस्य ।
उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः ॥ ६१ ॥

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय दुःखम् ।
कीर्तिं च दिक्षु वितनोति तनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥ ६२ ॥

हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मना
ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं वृद्धिं परां गच्छति ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ ६३ ॥

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः

ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरस्त्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निस्पृहाः ॥ ६४ ॥

अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्य ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥ ६५ ॥

क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥ ६६ ॥

गङ्गेवाघविनाशिनी जनमनःसन्तोषवच्चन्द्रिका
तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानान्धकारापहा ।
छायेवाखिलतापनाशनकरी स्वर्धेनुवत्कामदा
पुण्यैरेव हि लभ्यते सुकृतिभिः सत्सङ्गतिर्दुर्लभा ॥ ६७ ॥

किं क्वापि प्रलयानलैर्विटपिनो निर्दह्य भस्मीकृताः ।
किंस्विद्दैवगजेन पङ्कजवनं निष्कन्दमुन्मूलितम् ।
किं वा हन्त कृतान्तकेसरिभयात् त्यक्तो मदः कुञ्जरै —
र्येनास्मिन् विरसे करीरकुसुमे हा भृङ्ग विश्राम्यसि ॥ ६८ ॥

इहानेके सत्यं सततमुपकारिण्युपकृतिं
कृतज्ञाः कुर्वन्तो जगति निवसन्त्येव सुधियः ।
कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ ६९ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरा प्रकटितप्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ७० ॥

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नारिकेला नराणाम् ।
उदकममृतकल्पं दद्युराजीवितान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति ॥ ७१ ॥
दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
मित्रावसानसमये विहितोदयोऽपि ।
चन्द्रस्तथापि हरवल्लभतामुपैति
नैवाश्रितेषु महतां गुणदोषशङ्का ॥ ७२ ॥
गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ ७३ ॥
धवलयति समग्रं चन्द्रमा जीवलोकं
किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि ।
भवति विदितमेतत् प्रायशः सज्जनानां
परहितनिरतानामादरो नात्मकार्ये ॥ ७४ ॥
केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ
विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः ।
विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः ।
श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥ ७५ ॥

---

## प्रथमः पाठः ।

१. अरविन्ददलायताक्षम्—अरविन्दस्य ( कमलस्य ) दले ( पर्णे ) इव आयते अक्षिणी ( नेत्रे ) यस्य सः, तम् । ( ष. ब. ) कुन्देन्दुशङ्खदशनम्—कुन्दश्च इन्दुश्च शङ्खश्च तद्वद् दशनाः यस्य तम् । ( ष. ब. ) इन्द्रादिदेवगणवन्दितपादपीठम्—इन्द्रः आदिः येषां ते, इन्द्रादयश्च ते देवाः, तेषां गणः, तेन वन्दितं पादपीठं (foot-stool) यस्य सः, तम् । ( ष. ब. ) वृन्दावनमेव आलयः ( गृहं ) यस्य सः, तम् । ( ष. ब. ) एतादृशं वसुदेवसूनुमहं वन्दे इत्यर्थः ।

२. वृष्णिवंशप्रदीपः—वृष्णीनां ( यादवानां ) वंशस्य प्रदीपः इव प्रदीपः । ( ष. त. ) मेघश्यामलः—मेघ इव श्यामलः ( नीलवर्णः । ) ( क. )

३. एकान्तम्—निश्चितम् । इयन्तम्—एतावन्तम् ( this much. ) अविस्मृतिः—न विस्मृतिः—सततस्मरणम् । भवे भवे—जन्मनि जन्मनि, प्रतिजन्म ।

४. मधुनः—मद्यस्य, मकरन्दस्य वा । अपायिनः—न पिबन्ति ते ।

५. नरकान्तक—नरकस्य ( नरकासुरस्य ) अन्तकः ( विनाशकः ), तत्सम्बुद्धिः । ( ष. त. ) अवधीरितशारदारविन्दौ—शरदि ( शरदृतौ ) भवं शारदम्, शारदे च ते अरविन्दे च । अवधीरिते ( तिरस्कृते ) शारदारविन्दे याभ्यां तौ चरणौ । ( तृ. ब. )

६. मुरभिदि—मुरं ( मुरदैत्यं ) भिनत्ति ( हन्ति ) इति मुरभिद् ( कृष्णः ) तस्मिन् । ( उ. त. ) जातु—कदाचिदपि ।

७. मा भैः—मा भैषीः, न भेतव्यम् । ( अनुचितोऽयं प्रयोगः । ) यामीः—यमसम्बन्धिन्यः ( मरणकालिकाः । ) ध्यायस्वेत्यार्षः प्रयोगः । व्यसनापनोदनकरः—व्यसनानां ( सङ्कटानां ) अपनोदनम् ( दूरीकरणम् ) करोति इति व्यसनापनोदनकरः, श्रीधरः । ( उ. त. )

८. कातरत्वम्—भीरुत्वम् । एका—केवला, असहाया ।

९. आनन्द—आनन्दस्वरूपिन् । निरामय—निर्गतः आमयः—( व्याधिः ) यस्य व्यधिशून्य ।

१०. क्षीरसागरः ( दुग्धसमुद्रः ) तस्य तरङ्गानां ये शीकराः, तेषां आसारः ( वृष्टिः ) तेन तारकिता ( तारकासदृशैः जलबिन्दुभिः पूर्णा ) अत एव चार्वी मूर्तिः यस्य सः तस्मै । ( ष. ब. ) ( श्रीकृष्णस्य शरीरमाकाशवन्नीलं तस्मिंश्च तारकावत् क्षीरसागरस्य शीकराः आसन् । ) भोगी ( शेषः ) तस्य भोगः ( शरीरं )

स एव शयनीयं ( bed ), तस्मिन् यः शेते तस्मै। ( उ. त. ) मधुविद्विषे-मधुं ( मधुदैत्यं ) विद्वेष्टीति मधुविद्विट्, तस्मै। ( उ. त. )

## द्वितीयः पाठः।

मानसे ( मानससरसि ) निवासिनाम्। सञ्जता ( उत्पन्ना ) ईर्षा यस्य सः। ( ष. ब. ) प्रफुल्लानि कह्लाराणि ( कमलानि ) तैः भासुरं कान्तिमत्, तेषु। ( तृ. त. ) हिमाः अंशवः ( किरणाः ) यस्य सः ( चन्द्रः ), तस्य खण्डः ( विभागः। ) तद्वत् धवलानि ( श्वेतानि। ) ( क. ) मृणालानि—कमलस्य तन्तवः। हंसानां राजा राजहंसः तस्य भावः राजहंसता ताम्। ( ष. त. ) धूर्तानां शिरोमणिः ( श्रेष्ठः। ) ( ष. त. ) रोषमिवाभिनयन्—क्रुद्धः इति आत्मानं दर्शयन्। अपरीक्ष्यवादिनः—अपरीक्ष्य वदन्ति ते। अभिधाय—उक्त्वा। उपजहार—अयच्छत्। बकहतक—हतकशब्दः 'दुष्टः' ( कुत्सितः ) इत्यर्थे उपयुज्यते। विपरिवर्तते—अन्यथा भवति। ( is changed )

## तृतीयः पाठः।

आत्मना ( स्वयं, स्वकर्मणा ) वञ्चितः, तस्य। ( तृ. त. ) जीवितात् ( प्राणेभ्यः ) निर्विशेषौ। ( पं. त. )—( as dear as life. ) अस्तमनकालः—अस्तकालः। मद्धेतोः—मम कृते। केवलं स्मर्तव्योऽहं प्रियजनकथासु—यदा स्निग्धजनकथा भवेयुस्तदा केवलमहं स्मरणीयः इति भावः। कोटिभागयोः—अग्रयोः। मौनमेव व्रतं ( नियमः ) यस्य सः, तेन। ( ष. ब. ) मिथः संवदताम्—परस्परं अन्योऽन्यं वा प्रति सम्भाषमाणानाम्।

## चतुर्थः पाठः।

१. प्राञ्जलिः—हस्तौ ( करसम्पुटौ ) मिलित्वा।

२. तेषां महर्षीणां शुश्रूषणं कुर्वती अहं समुपस्थिता आसमित्यन्वयः।

३. ते ( गुरवः ) ब्रह्मणः पदं गताः—मोक्षपदं प्राप्ताः। समाहिता—(attentive to duty ) स्वकर्तव्यपरायणा।

६. कलेवरम्—शरीरम्।

८. मनोवागगोचरः—मनसो वाचश्च अगोचरः। ( ष. त. ) ( ज्ञातुमशक्यः। )

११. त्वामुपस्थितः—तव सन्निधिं प्राप्तः।

१२. सुदुर्लभम् सुतरां दुःखेन लब्धुं शक्यः सुदुर्लभः तम्। ( क. )

## पञ्चमः पाठः ।

टिट्टिभः–टिटवी इति महाराष्ट्रभाषायाम् । पुलिनम्–समुद्रतीरवर्ती वालुका-प्रदेशः । वेला–tide. का मात्रा नाम समुद्रस्य मम पुरतः–प्रागुक्तस्य वाक्यार्थ-स्यैव पुनरुक्तिरत्र वर्तते । नवाः नद्यः । नवनदीनां शतानि (असंख्येयानि ।) पक्षिकीटकस्य–क्षुद्रपक्षिणः । जायाच पतिश्च दंपती तयोः । (द्वं.) प्रमाणम्–अस्य बलस्य प्रमाणम्, कियद्वा अस्य बलमिति । लोहसन्निभया–लोहसदृशया । विग्रहः–वैरम् । असाराणाम्–अल्पबलानाम् । समवायः–मेलनम्, समूहः । वैनतेयः–विनतायाः अपत्यं वैनतेयः (गरुडः ।) परिभवः–अवमानः, पराजयः । सन्धाय–(धनुषि इति अध्याहारः ।) स्थलतां त्वां नेष्यामि–सर्वमपि जलं शोषयिष्यामि ।

## षष्ठः पाठः ।

अवसन्नायाम्–गतप्रायायाम् । अस्ताचलचूडावलम्बिनि–अस्ताचलस्य (पश्चिम-पर्वतस्य) चूडां (शिखरं) अवलम्बते सः, तस्मिन् । (उ. त.) कुमुदिनी-नायके–कुमुदिनीनां नायकः, तस्मिन् । (ष. त.) कपोतानां राजा—कपोतराजः । (ष. त.) हातव्याः—त्यक्तव्याः । तन्द्रा—drowsiness. चक्षुर्विषयातिक्रान्तेषु–अगोचरीभूतेषु, अदृश्यमानेषु । प्रत्यभिज्ञाय–संस्मरणपूर्वकं ज्ञात्वा । कुत्सितस्य पुरुषस्य लक्षणं (चिह्नम् ।) (क.) प्रहृष्टमनाः–प्रहृष्टं मनः यस्य सः । (ष. ब.) अस्मान् अश्रिताः अस्मदाश्रिताः तेषाम् । (द्वि. त.) पुलकितः–पुलकाः (रोमाञ्चाः) सञ्जाताः अस्य । (त. बृ.) आमन्त्र्य–आपृच्छ्य । (having taken leave.)

## सप्तमः पाठः ।

१. उटजे–आश्रमे । शरदः व्यपायः–(निर्गमनम् ।) (ष. त.)

२. शर्वरी–रात्रिः ।

३. प्रह्वः–सुशीलः, विनयान्वितः ।

५. नीहारे (fog, frost) परुषः (कठोरः) । सस्यानां (crops) मालाः सन्त्यस्यामिति सस्यमालिनी । (त. बृ.) । अनुपभोग्यानि–अतिशीतत्वात् सेवितुमयोग्यानि ।

६. प्राज्याः (प्रभूताः) कामाः (इच्छाः) येषां ते । (ष. ब.) विजि-गीषवः–विजेतुमिच्छवः ।

७. अन्तकेन ( यमेन ) सेविताम् । ( तृ.त. ) दिशं—दक्षिणां दिशम् । तदा उत्तरा दिक् सूर्यहीनत्वात् विरहिणीव भाति ।

८. हिमस्य कोषेण आढ्यः ( सम्पन्नः । ) ( तृ. त. ) हिमगिरिः उत्तरस्यां दिशि स्थितः । तस्मात् दक्षिणायनकाले हिमगिरिः दूरसूर्यः ( दूरे सूर्यः यस्मात् सः ) ( पं. ब. ) भवति ।

९. सुभगाः—सुखकराः । छाया च सलिलं च शैत्यात् दुर्भगं ( दुःखदं ) भवति हेमन्तकाले ।

१०. पटु—तीव्रम् । शून्यानि अरण्यानि ( तरुपल्लवानां जीर्णत्वात् ) येषु ते । ( स. त. )

११. हेमन्ते पुष्यनीताः ( पुष्येण नक्षत्रेण नीताः—तदवलम्बिन्यः इत्यर्थः । ) त्रियामाः ( रात्रयः ) दीर्घतराः शीताश्च भवन्ति ।

१२. रविं प्रति संक्रान्तं ( गतं ) सौभाग्यं ( तेजः, शोभा ) यस्य सः । ( ष. ब. ) निःश्वासान्धः—श्वासबाष्पेण आदर्शो मलिनो भवति । तेन च प्रतिबिम्बं दर्शयितुं अक्षमो भवति इति प्रसिद्धम् ।

१३. ज्योत्स्ना—चन्द्रप्रकाशः । ( हिम ) तुषारैः मलिना । वनेषु अटनकाले आतपेन सीता श्यामला बभूव । तथैव ज्योत्स्नापि हेमन्ते दृश्यते ।

१४. हिमेन ( शीतत्वेन ) वृद्धः द्विगुणीकृतः पश्चिमदिग्वायुः शीततरः वाति ।

१५. बाष्पम्—हिमबिन्दवः, नीहारः । यवगोधूमादीनि सस्यानि यत्र सन्ति तान्यरण्यानि । ( त. बृ. )

१६. कनकप्रभाः (पीतवर्णाः, पक्वत्वात्) शालयः ( शिरसि तण्डुलानां सम्पुटभारेण ) किंचित् आलम्बाः ( वक्रीभूताः ) शोभन्ते ।

१७. अवश्यायः—नीहारः तेन प्रक्लिन्नानि ( आर्द्रानि ) शाद्वलानि ( तृणानि ) यस्याः सा वनभूमिः । ( ष. ब )

१८. गजः तृषितः अपि शुण्डादण्डेन जलं स्पृशन् शीतत्वमनुभूय जलमपीत्वैव शुण्डामाकर्षति ।

१९. न गाहन्ते—अत्यन्तशीतत्वात् । अप्रगल्भाः—भीरवः । आहवः—युद्धम् ।

२० Difference between अवश्याय ( dew ) and नीहार ( mist ).

२१. सरितां जलं बाष्पेण आवृतम् । तेन तत्रवर्तिनां सारसानां रुतेन

( आरावेण ) एव तस्य अनुमानं क्रियते । सरितां तीरे वालुकाप्रदेशः हिमपातेन आर्द्रीभूतः । एतादृश्यः सरितः संप्रति दृश्यन्ते ।

२२. अगः ( पर्वतः ) तस्य अग्रम् तत्र स्थितम् ( स. त. ) ( गिरिशिखरवर्ति जलम् इत्यर्थः । )

२३. हेमन्ते कमलानां सर्वथा नाशः समुत्पद्यते । पत्राणि जीर्णानि, केसरकर्णिकादि शीर्णं ध्वस्तं नष्टं च । तेन केवलं नालः ( मूलदण्डः ) एव दृश्यते ।

## अष्टमः पाठः ।

विग्रहः– कलहः । कमलमयः पर्यङ्कः ( मञ्चः । ) राज्ञां चक्रं ( समूहः ) तत् वर्तयते इति वर्ती । ( कृ. वृ. ) मरुस्थले–निर्जलभूमौ । अधिक्षिपसि–निन्दसि । एकान्ततः–सर्वथा । अर्थं–वस्तु । राज्यं किम्–राज्यशासनस्य न किमपि महत्त्वमित्यर्थः । अवधीयताम्–सावधानं श्रूयताम् । सर्वेषां ( षट् ) शास्त्राणां ( चतुर्णां–धर्मः, अर्थः, कामः, मोक्षः ) अर्थानां च पारं गच्छतीति । ( कृ. वृ. ) दूतस्य कर्म दौत्यम् तेन—दूतकर्मणा । निदानम्–कारणम् । अनुसन्धीयताम्–क्रियताम् ।

## नवमः पाठः ।

व्यस्यते ( विक्षिप्यते चित्तं ) अनेन, तद् व्यसनम्, तस्मात् विमोक्षः । ( पं. त. ) संरूढदुर्जनसंसर्गः–संरूढः ( वृद्धिं प्राप्तः ) दुर्जनानां संसर्गः यस्य सः । ( ष. ब. ) समुपाचिनोत्–अवर्धत । अभ्यभूयत–पराभूतः, रोगाक्रान्तोऽभवदित्यर्थः । एकान्ततः–निश्चयेन । विरागम्–dislike. अतिभूमिं–अतिक्रांतो भूमिम् अतिभूमिः । ( द्वि. त. ) गतम्–संवृद्धम् । चिकित्सितुम्–रोगस्य निदानं कर्तुं तं निवारयितुं च । श्रेष्ठिन्–वैश्यवर । एकवृद्ध्या–एकया वर्धते इति, तया । (increasing by one.) अपरिवर्त्य–नान्यथा कृत्वा । ( without changing. ) जह्रास–ह्रासं ( न्यूनत्वं ) जगाम । नीरन्ध्रितम्–सञ्जातं नीरन्ध्रं ( अवकाशाभावः ) यस्मिन् तत् । ( filled up. ) ( "तारकादिभ्य इतच् ।" ) क्रियायोगो निदानपरिवर्जनम्–उपशमव्यापारः तथा कर्तव्यः येन निदानस्य ( कारणस्य ) परिवर्जनं ( नाशः ) भवेत् इति । हाप्यमानम्–त्याज्यमानम् ।

## दशमः पाठः ।

१. बुभुत्सुः—बोद्धुमिच्छुः । 'पुरैकदा ब्रह्मविष्णुशिवेषु देवेषु कः सर्वोत्तम इति जिज्ञासया महर्षिभिरभ्यर्थितो भृगुर्महत्त्वं ज्ञातुं भगवन्तं विष्णुं वक्षसि पदा ताडयामास । ततो भगवान् विष्णुरुत्थाय सादरं तं बभाषे । किमर्थं कमलोदरकोमलेन पादेन पाषाणवद् दृढं मे वक्षोऽभिहत्य स्वात्मा व्याकुलितः ? देहि मदङ्के तमिति मुहुर्मुहुस्तं प्रार्थयामास । तत्तादृशीं शिवब्रह्मणोरसुलभां तस्य क्षमां निरूप्य महर्षिर्भृगुर्मुदमियाय मेने चायमेव त्रिषु देवेषु महत्तमः' इति कथात्रानुसन्धेया ।

२. बिभीषणेन सम्यगुपदिष्टो रावणस्तं वाग्भिः सन्तक्ष्य स्वनगरान्निःसारयामास । ततः स रामानुकूलो भूत्वा रावणनाशं चकार ।

३. हृतराज्यदर्पसारम्—हृतं ( पाण्डवेभ्यः हृतं ) राज्यं येन सः ( तृ. ब. ) दर्पः ( अभिमानः ) एव सारं यस्य सः ( ष. ब. ) हृतराज्यश्च असौ दर्पसारश्च तम् । ( क. ) प्रोषु–( प्र+वस् ) अवसन् । समयः—कालः ।

४. वनान्तात्—वनमध्यात् । 'खलः करोति दुर्वृत्तं नूनं फलति साधुषु । दशाननोऽहरत् सीतां बन्धनं च महोदधेः ॥' इति सुभाषितम् ।

७. शतयोजनततम्—शतं योजनानां शतयोजनं, तत्परिमाणं ततः ( विस्तीर्णः ) तम् । ( क. )

८. धुर्यः—धुरं वोढुं समर्थः ( कार्यक्षमः । )

९. यदा वसुदेवो देवकीं पर्यणयत् तदा तस्यां जातः पुत्रस्त्वां हनिष्यतीत्याकाशवाणी कंसेन श्रुता । ततः सोऽतीव क्रुद्धो भूत्वा तां स्वभगिनीं देवकीं हन्तुमुद्युक्तः । तदा वसुदेवेन स मृदुभाषणेन सान्त्वितः । साम्ना—सौम्येन भाषणेन ।

१०. अनर्हया उक्त्या—अयोग्यैः वचनैः । राजसूयकाले अग्रपूजाविवादे भगवन्तं कृष्णं निन्दन् शिशुपालः भगवता हतः ।

११. कृतं आगः ( पापं, पीडा ) येन स कृतागस्कः । ( तृ. ब. ) कालियो नागः यमुनाजलात् कृष्णेन निःसारितः । निरयापयत्—निःसारयामास । ( drove out. )

१२. निगमानां आगमानां च ( वेदशास्त्राणां ) वेत्ता । ( ज्ञाता ) धानुष्कवृत्तिः ( धनुःसम्बन्धिनी )—क्षात्रवृत्तिः ।

१३. शम्भोः मौलौ (शिरसि) इति अधिशम्भुमौलि । (अव्ययीभावः)

१४. उपहारः–उपायनम् । ( a present. )

१५. अम्बरीषो नाम भगवद्भक्तो राजातिथिं दुर्वाससं विहाय द्वादश्यां तीर्थोदकं पीत्वा पारणां कृतवान् । तदा स्नानादिकं सम्पाद्य प्रत्यागच्छता कुपितेनर्षिणा शप्तो राजा भगवतो विष्णोः सुदर्शनचक्रेण रक्षितः । सुलभकोपः स ऋषिश्च सुदुःसहं दुःखं प्राप्तः । तस्मादस्थाने (अनुचिते स्थले) कोपं न कुर्यात् ।

१६. व्यूहः–सेनायाः रचनाविशेषः । चक्रव्यूहं भिन्दन् बालोऽभिमन्युः कुरुभिर्हतः ।

१७. विमृश्य—विचार्य । घोरमपि स्वधर्मं चरेत् ।

१८. शराणां तल्पं–(शय्या ।) धर्मजः—युधिष्ठिरः । दुःखेन प्राप्यते अन्तः अस्य इति दुरन्तम् । (ब.)

२० सापत्नमातुः कठोरेण वाक्येन तर्जितो बालो ध्रुवो गृहान्निर्गत्य सुतीव्रं तपस्तप्त्वा भगवत्प्रसादात् शाश्वतं स्थानं प्राप्तः । व्यवसायिना (उद्यमशीलेन) भाव्यम्—उद्यमः खलु कर्तव्यः ।

## एकादशः पाठः ।

वर्तनार्थी—वेतनार्थी । ताम्बूलं दत्वा–वेतनदानाङ्गीकारसूचकं ताम्बूलं दत्वा । (appointing.) तद्विनियोगः–तस्य (सुवर्णचतुष्टयस्य) विनियोगः (व्ययः ।) (ष. त.) सुनिभृतम्–गुप्ततया । व्ययितम्–(व्यय्) व्ययीकृतम् । (spent.) सूचीभेद्ये तमसि–निबिडे अन्धकारे । आलम्बनम्–निवासः, अवस्थानम् । सर्वमङ्गला–पार्वती ('शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।' इत्यमरः ।) उपहारीकरोषि–अर्पयसि । निष्क्रयः–प्रत्युपकरणम् । (a good return for the pay.) निस्तारः–निष्क्रयः । एतत्परित्यक्तेन–एतेन वीरवरेण वियुक्तेन । सदारपुत्रः–दारैः (पत्न्या) पुत्रेण च सहितः । (सह ब.) सर्वोत्कर्षेण–सर्वोत्कृष्टेन । प्रासादगर्भम्–राजगृहमध्यम् । अकृपणः–अदीनः । (a well-to-do man.) प्रगल्भः–धृष्टः, धीरः । प्रस्तुत्य–निवेद्य ।

## द्वादशः पाठः ।

भगवतो वाल्मीकेराश्रमपदमरुन्धतीजनकादयः प्रविशन्ति । ततो लब्धानाध्याया आश्रमबटवो मिथः स्वैरं संलपन्ति अतिथीनुद्दिश्य ।

भूयिष्ठसन्निधापितातिथिजनस्य–(आश्रमपदस्य विशेषणमिदम् ) भूयिष्ठः सन्निधापितः ( प्रापितः ) अतिथिजनः यस्मिन्, तस्य । ( स. ब. ) समधिकारम्भरमणीयता-समधिकैः ( अधिकतरैः ) आरम्भैः ( सम्भारैः ) रमणीयता। ( तृ. त. ) तथाहि–तमेव अर्थमवगच्छ ।

सद्यःप्रसूतया प्रियया पीताद् अभ्यधिकं ( अवशिष्टम् । ) नीवाराणां ( तृण-धान्यविशेषाणां ) ओदनमण्डम् । ( gruel ) ( ष. त. ) उष्णमधुरं तपोवनमृगः पर्याप्तं ( यथेप्सितं ) आचामति ( पिबति । )

मनाक् ( ईषत् ) सर्पिष्मतः ( घृतयुक्तस्य ) भक्तस्य ( ओदनस्य ) स्फुरता ( प्रसरता ) गन्धेन अनुसृतः ( अन्वितः ) कर्कन्धूफलैः ( बदरैः ) मिश्राणां शाकानां पचनं ( पाकः ) तस्य आमोदः ( गन्धः ) ( ष. त. ) परिस्तीर्यते ( सर्वत्र वितन्यते । )

जीर्णाः कूर्चाः ( beard ) येषां ते । 'कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे'। इति मेदिनी। स्थविराणां वृद्धानाम् सार्थस्य समूहस्य धुरन्धरः नेता। दारानधिष्ठाय–येषां नायको भूत्वेतिभावः। (being at the head of Dasharatha's wives. )

हुम्—संशयार्थे। ( 'हुं वितर्के परिप्रश्ने'। अमरः । ) आः–कोपे । परापतितेनैव–आगतमात्रेणैव । वराकी–दीना । मडमडायिता–भक्षिता । ( मडमडेति शब्दा-नुकारः । ) मधुपर्कः अतिथ्यादिपूजोपचारभेदः ( दधि सर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः। प्रोच्यते मधुपर्कः।) मांसेन सहितः भवतु इति वेदे विहितम् । आम्नायः–वेदः। श्रोत्रियाय–वेदविदे ब्राह्मणाय। वत्सतरी–द्विवर्षदेशीया गौः । महान् उक्षा–महोक्षः (महान् वृषभः। ) निर्वपन्ति भोजनार्थं यच्छन्ति । गृहमेधिनः–गृहस्थाश्रमिणः–समामनन्ति । ( सम्+आ+म्ना ) धर्मशास्त्रविहितमिति वदन्ति । निगृहीतोऽसि–पराभूतोऽसि । ( you are caught. )

मिश्रशब्दः पूजायाम् । विशसिता मारिता । विसर्जिता–त्यक्ता ( न मारिता । ) मांसाद् अनिवृत्ताः अनिवृत्तमांसाः ( मांसभक्षकाः ), तेषाम् । ( पं. त. ) कल्पम्–विधिम् ।

दैवदुर्विपाकः–दुर्भाग्यम् ।

वैखानसः–यतिः । ('स तु वैखानसो यः स्याद्युक्ताचारो जितेन्द्रियः'। चन्द्रद्वीपतपोवने तपस्तप्यमानस्य जनकस्य कतिपये संवत्सराः व्यतीताः इत्यन्वयः। प्राचेतसम्–वाल्मीकिम् ( 'प्राचेतसश्चादिकविः'। अमरः )।

## त्रयोदशः पाठः ।

१. जातु-कदाचित् । रुरोः-मृगस्य । गृहीतवर्त्मा-गृहीतं वर्त्म येनः सः । ( तृ. ब. ) ( मृगानुसारी इत्यर्थः । ) श्रमेण फेनं मुञ्चति इति श्रमफेनमुक् । ( कृ. वृ. ) तेन तुरङ्गमेण । तपस्विभिः गाढाम् ( यस्यां तपस्विनः स्नानं कुर्वन्ति तां ) तमसां प्राप इत्यन्वयः ।

२. तस्याः अम्भसि कुम्भपूरणभवः पटुः ( मधुरः ) निनदः ( शब्दः ) उच्चैः उच्चचार ( उत्पन्नः । ) द्विरदस्य ( हस्तिनः ) बृंहितं ( शब्दितं ) शङ्कते असौ राजा । शब्दानुसारेण पतति इति, तम् ( कृ. वृ. ) इषुम् विससर्ज—अक्षिपत् ।

३. लक्ष्मीकामस्य क्षत्रियस्य युद्धादन्यत्र गजहननं शास्त्रेण निषिद्धम् । शास्त्रनियमं विलङ्घ्य । पङ्क्तिः ( दश ) रथः ( दशरथः ) यत् कृतवान् तत् गजहननं नृपस्य अनुचितम् । श्रुतवन्तः—विद्वांसः । रजोगुणेन निमीलिताः ( दूषिताः । )

४. तमसायां जलकुम्भं पूरयन् कश्चित् श्रावणो नाम मुनिकुमारः दशरथशरेण विद्धः आक्रदन्ति—'हा तात' इति । तस्य ( क्रन्दनस्य ) वेतसैः गूढं ( छन्नं ) प्रभवं ( उत्पत्तिस्थानम् ) अन्विष्यन् क्षितीशः प्रोतम्—विद्धम् तादृशं मुनिकुमारं दृष्ट्वा नृपस्य मनसि यः तापः ( दुःखं ) समुत्पन्नः स शल्य इवासीत् ।

५. तेन ( नृपेण ) पृष्टः अन्वयः (वंशः) यस्य सः । स्खलद्भिः (अस्फुटोच्चारितैः) अक्षरपदैः आत्मानं कथयांबभूव ( अकथयत् । ) "शूद्रायामस्मि वैश्येन जातो जनपदाधिप ।" एवं श्रावणस्य वंशवृत्तान्तो रामायणे ख्यातः ।

६. तेन चोदितः ( प्रेरितः ) तच्चोदितः । ( तृ. त. ) अवसन्ना ( नष्टा ) दृक् ( दृष्टिः ) ययोः तौ । तयोः पित्रोः सकाशं तं निनाय ( नीतवान् । ) तथागतं ( वेतसगूढं ) तं एकं पुत्रं ( श्रावणं ) उपेत्य ( समीपं गत्वा ) अज्ञानतः ( द्विरद इति मत्वा ) स्वचरितं ( स्वकृतं शरक्षेपणम् ) ताभ्यां ( पितृभ्यां ) नृपतिः ( दशरथः ) शशंस ( कथितवान् । ) वेतसगूढं श्रावणं गजः इति मत्वाहं तस्मिन् शरमक्षिपम् इति दशरथस्तस्य पितृभ्यां कथितवान् ।

७. तौ दम्पती ( जाया च पतिश्च ) ( द्वं. ) बहु विलप्य ( रुदित्वा ) शिशोः ( श्रावणस्य ) उरस्तः ( पञ्चम्यर्थे 'तसिल्' प्रत्ययः ) निखातं शल्यं प्रहर्त्रा ( नृपतिकरेण ) उदहारयताम् । ( प्रयोजकप्रयोगोऽयम् ) परासुः—गतप्राणः ।

वारिभिः–( हस्ते जलं गृहीत्वा ) शापो दीयते। तत् जलम् अत्र नयनाभ्यां एव प्रस्नुतम् हस्ते पतितम् इत्यर्थः।

८. ( वृद्धेन दत्तः शापो यथा ) अन्त्ये वयसि भवानपि पुत्रशोकात् दिष्टान्तं ( मरणम् ) आप्स्यसि। ( यथा अहं अधुना पुत्रशोकात् मरिष्यामि तथा त्वमपि मरणं प्राप्स्यसि इत्यर्थः। ) आक्रान्तः ( पादाहतः, पादेन ताडितः ) पूर्वं आक्रान्तः आक्रान्तपूर्वः, तम् ( प्रथमं अपकृतं दशरथेन इत्यर्थः। )

९. अयं शापः अपि मयि अदृष्टशोभे ( अपुत्रके ) सानुग्रहः ( उपकारकः एव ) भगवता पातितः। पुत्रशोकात् त्वं मरिष्यसि इति शापेन सूचितः पुत्रसम्भवः अपुत्रके नृपे अनुग्रहः एव। अत्र दृष्टान्तः–इन्धनेद्धः ( काष्ठैः प्रज्वलितः ) ज्वलनः ( अग्निः ) कृष्यां क्षितिं दहन्नपि तामेव बीजाङ्कुराणां जननीं ( उत्पादनयोग्यां ) करोति।

१०. इत्थंगते ( प्रवृत्ते सति ) अयं गतघृणः ( अकरुणः ) तव वध्यः किं विधत्ताम् ( किं मया पापेन अधुना कार्यं ) इति दशरथेनोक्तः स मुनिः सदारः ( भार्यया सह ) परासुं ( मृतं ) पुत्रं अनुगन्तुमिच्छन् स्वदहनाय अग्निकाष्ठानि ययाचे ( अयाचत। )

११. अस्य ( ऋषेः ) शासनं ( आज्ञां ) सम्पाद्य ( यथानिर्दिष्टं कृत्वा। ) ( कृत पातकेन विलुप्ता धृतिः यस्य सः। ( ष. ब. ) राजा अन्तः ( मनसि ) निविष्टं ( स्थापितम् ) पदं ( स्थानं ) येन तं ( तृ. ब. ) शापं ( स्वमरणकारणं ) दधत् ( धारयन् ) ( वनात् ) निवृत्तः। और्वः–ज्वलनः ( वडवानलः ) तं दधत् अम्बुराशिः ( सागरः ) यथा तथा।

## चतुर्दशः पाठः।

अजीजनत्–प्रासूत। ( gave birth to. ) आसादितम्–प्राप्तम्। स्त्रीलिङ्गिविप्रबालानाम्--स्त्रियः च लिङ्गिनः ( लिङ्गं चिह्नं येषां ते, परिव्राजकादयः। ) च विप्राः च बालाः च। ( द्वं. ) प्राणत्यागे सञ्जाते ( उपस्थिते ) अपि तेषु न प्रहर्तव्यमित्यर्थः। तं प्रति प्रचलितौ–तं सिंहमभिभवितुं प्रस्थितौ इत्यर्थः। भङ्गम्--उत्साहभङ्गम्। दूरतोऽपि नष्टः–दूरादेव प्रधावितः। स्फुरिताधरपल्लवः--अधरः इव पल्लवः, स्फुरितः अधरपल्लवः यस्य सः। ( ष. ब. ) त्रिशिखीम्--तिस्रः शिखाः यस्याः ताम्। ( ष. ब. ) ( अतिवक्रामित्यर्थः। )

## पञ्चदशः पाठः ।

तेजोगर्भम्-तेजः गर्भे यस्य तम्। ( ष. ब. ) सहस्रांशुः-सूर्यः । मणिभासुरम्-मणिना भासुरं ( प्रकाशमानम्।) (तृ. त.) अलीकः-अनृतः। ( false ) अपवादः-निन्दा । पदचिह्नानि-पदानां चिह्नानि ( ष. त. ) ( foot prints-पदलाञ्छनम्।) व्यापादितम्-मृतम् । घनान्धकारच्छन्नाम्-घनेन ( निबिडेन ) अन्धकारेण च्छन्नाम् । ( तृ. त. ) अवधीः-अहन् । व्रीडाभिभूतः-व्रीडया ( लज्जया ) अभिभूतः ( आक्रान्तः।) रमणीललामभूताम्-रमणीषु ललामभूताम् ( उत्कृष्टाम्।) ( स. त. ) नियुद्धम्-द्वन्द्वयुद्धम् । स्त्रीरत्नभूताम्-स्त्रीषु रत्नभूतां ( उत्कृष्टाम्।) ( स. त. ) ( जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते। )

## षोडशः पाठः ।

१. पूर्वापरौ-पूर्वश्च अपरश्च ( द्वं. ) ( प्राच्यपश्चिमौ । ) तोयनिधी ( सागरौ ) वगाह्य ( अवगाह्य, प्रविश्य ) पृथिव्याः मानदण्डः ( measuring rod ) इव स्थितः ।

२. सर्वशैलाः ( सर्वे गिरयः ) यं ( हिमालयं ) वत्सं परिकल्प्य दोहदक्षे ( दोहनसमर्थे ) मेरौ दोग्धरि स्थिते सति पृथूपदिष्टां-पृथुनाम्ना नृपेण उपदिष्टां ( प्रदर्शितां ) धरित्रीं भास्वन्ति ( कान्तिमन्ति ) रत्नानि महौषधीश्च दुदुहुः ( अदुहन्। )

३. अनन्तानां ( अपरिमितानां ) रत्नानां ( श्रेष्ठवस्तूनां ) प्रभवस्य ( कारणस्य ) यस्य ( हिमालयस्य ) हिमं, सौभाग्यं ( सौन्दर्यं ) विलुम्पतीति ( सौन्दर्यघातकं ) न जातम्।

४. यः ( हिमगिरिः ) अप्सरसां विभ्रममण्डनानि-( विलासालङ्करणानि ) तेषां सम्पादयित्रीम् । बलाहकानां छेदेषु ( खण्डेषु ) विभक्तः ( सङ्क्रमितः ) रागः यया ताम्। ( तृ. ब. ) धातवः सन्तीति धातुमान्, तस्य भावो धातुमत्ता, ताम्। अकालसन्ध्यामिव शिखरैः बिभर्ति ( धत्ते। )

५. सिद्धाः-देवयोनिविशेषाः । आ मेखलाभ्यः-आमेखलम् । सञ्चरतां घनानां ( मेघानां ) अधःसानूनि ( अधस्तटानि ) गतां ( प्राप्ताम् ) छायां निषेव्य

वृष्टिभिः उद्वेजिताः ( क्लेशिताः ) यस्य ( हिमाद्रेः ) आतपवन्ति ( आतपयुक्तानि ) शृङ्गाणि आश्रयन्ते ।

६. तुषारस्रुतिधौतरक्तं–तुषारस्रुतिभिः ( हिमकणैः ) धौतं ( क्षालितं ) रक्तं यस्मिन् तत् । ( स. ब. ) हताः द्विपाः ( गजाः ) यैः तेषां केसरिणां ( सिंहानां ) पदं ( पदचिह्नम् ) अदृष्ट्वापि किराताः नखरन्ध्रेभ्यः मुक्तैः ( विसृष्टैः ) मुक्ताफलैः मार्गं विन्दन्ति इत्यन्वयः ।

७. धातुरसेन—धातूनां ( सिन्दूरादीनां ) रसेन न्यस्तानि ( लिखितानि ) अक्षराणि यासु । अत एव कुञ्जरस्य ( हस्तिनः ) ये बिन्दवः ( पद्मकाख्याः आलेखविशेषाः ) ते इव शोणाः ( रक्तवर्णाः ) भूर्जत्वचः ( भूर्जवल्कलानि ) विद्याधराणां बालकानां आलेखाः ( चित्राणि ) तेषां लेखाः ( लेखनानि ) तेषां क्रियया उपयोगं ( उपकारं ) व्रजन्ति । ( विद्याधरबालानां विहारयोग्योऽयं शैल इति भावः । )

८. यः ( हिमगिरिः ) दरी ( गुहा ) सा एव मुखं तस्मात् उत्थितेन ( उत्पन्नेन ) समीरणेन ( वायुना ) कीचकाः ( वेणुविशेषाः ) तेषां रन्ध्र-भागान् ( छिद्रप्रदेशान् ) पूरयन् उद्गास्यतां ( उच्चैः गानं करिष्यतां ) किन्नराणां ( देवगायकानां ) तानप्रदायित्वं उपगन्तुं इच्छति । ( The Himalaya, as it were, plays to the tune of the singing of the Kinnaras with the musical notes produced by the wind passing through the holes of bamboos. )

९. विघट्टितानां ( घर्षितानाम् ) सरलद्रुमाणाम् स्रुतानि ( घर्षणात् क्षरितानि ) क्षीराणि येषां, भावः तत्ता, तया हेतुना प्रसूतः ( उत्पन्नः ) गन्धः सानूनि सुरभीकरोति ।

१०. दिवाभीतम्–दिवा ( दिवसे ) भीतं ( भयाक्रान्तं ) इव तद् ( उलूक-मित्यर्थः । ) दिवाकरः ( सूर्यः ) उच्चैःशिरसां ( उन्नतानां, सज्जनानां ) शरणं प्रपन्ने ( शरणागते ) क्षुद्रेऽपि सति नूनं ममत्वं ( ममायं इत्यभिमानः ) वर्तते ।

११. चमर्यः ( मृगीविशेषाः ) लाङ्गूलानां विक्षेपैः ( चालनैः ) विसर्पिण्यः ( वितताः ) शोभाः येषां तैः । ( ष. ब. ) चन्द्रमरीचिभिरिव गौरैः बालव्यजनैः ( चामरैः ) यस्य ( हिमगिरेः ) गिरिराजशब्दं ( गिरीणां राजा इति संज्ञां )

अर्थयुक्तं ( अर्थप्रतिपादकं ) कुर्वन्ति । राजानो हि च्छत्रचामरादिचिह्निताः वर्तन्ते तथैव एष गिरिराट् इत्यर्थः ।

१२. भागीरथी ( गङ्गा ) तस्याः निर्झरः ( प्रवाहः ) तस्य सीकराणां ( कणानां ) ( ष. त. ) वोढा ( वाहकः । ) मुहुः कम्पिताः देवदारवो येन सः । ( तृ. ब. ) तथैव भिन्नानि शिखण्डिनां ( मयूराणां ) बर्हाणि येन सः । ( तृ. ब. ) यद्वायुः–यस्य ( हिमाद्रेः ) वायुः । अन्विष्टमृगैः–अन्विष्टाः ( मार्गिताः ) मृगाः यैः तैः ( तृ. ब. ) किरातैः ( मृगयाटनश्रान्तैः किरातैः इत्यर्थः ) आसेव्यते ।

१३. सप्तर्षीणां हस्तैः अवचितेभ्यः अवशेषाणि ( अवशिष्टानि ) ( पं. ब. ) यस्य ( हिमाद्रेः ) अग्रे ( वर्तमानानि ) यानि सरांसि तेषु रुहाणि ( पद्मानि ) अधः परिवर्तमानः ( भ्रमन् ) विवस्वान् ( सूर्यः ) ऊर्ध्वमुखैः ( उपरि गच्छद्भिः ) मयूखैः ( किरणैः ) प्रबोधयति । सूर्यमण्डलस्यापि उपरि वर्तमानानि हिमगिरेः सरांसि इत्यर्थः ।

## सप्तदशः पाठः ।

प्रतिपन्नार्थाः–प्रतिपन्नः ( स्वीकृतः ) अर्थः ( कार्यं ) यैः ते । ( तृ. ब. ) निर्वृतः–सुखितः । गृहधर्मपरायणः–गृहधर्मः एव परं ( मुख्यं ) अयनं ( स्थानं ) यस्य सः । ( ष. ब. ) अरण्यमधिवसन् ( "अधिशीङ्स्थासां कर्म" इत्यनेन अरण्यशब्दाद् द्वितीयाविभक्तिः । ) उपप्लावयितुम्–विनाशयितुम् । बद्धपरिकराः–बद्धाः परिकराः ( कटिप्रदेशः ) यैः ते । ( तृ. ब. ) ( Who had girded up their loins ) आक्रमितुम्–अभिभवितुम् । प्रबभूवुः–समर्थाः अभवन् । अनुयुक्ताः–पृष्टाः । मुखरयति–मुखरं ( शब्दयुक्तं ) करोति । अवधार्यताम्–ज्ञायताम्, निश्चीयताम् । नामशेषान्–नाम एव शेषं येषां ते ( मृतान् इत्यर्थः । ) आस्थाय–कृत्वा । गभस्तिनी–दधीचिमुनेः इयं भार्या । निक्षेपः–न्यासः । ( deposit ) दुःखविपाकिनम्–परिणामे दुःखजनकम् । समुद्गताम्–वदनात् बहिः निर्गताम् । शरणम्–रक्षितारम् । ( 'शरणं गृहरक्षित्रोः' । इत्यमरः ) निनीषाम्–नेतुम् इच्छाम् । समेधते–वर्धते । उपप्लवः–त्रासः । ईहमानः–इच्छन् । निकामम्–अत्यर्थम् । भवतः प्रतिपालयन्–युष्मदागमनं कदा भविष्यतीति चिन्तयन् । प्रापय्य–नीत्वा । साम्प्रतम्–उचितम् । कृतं परिहासेन–enough of jesting. जगाद–उवाच, अवदत् । योगयुक्तस्य...निर्वा-

११

द्यताम्—योगेनाहं तुनुं त्यजामि ततो मम शवादस्थीनि गृह्णीत तेभ्यश्चास्त्राणि कुरुत । महासत्त्वः—महत् सत्त्वं ( धैर्यं ) यस्य सः । परमात्मसात् चक्रे—ईश्वराधीनं कृतवान् ( प्राणान् अत्यजत् इत्यर्थः । ) विषसाद—विषादं जगाम, खिन्नोऽभवत् । उद्भ्रान्ता—ज्ञानशून्या, मूर्छिता । सोरस्ताडम्—वक्षःस्थलताडनपूर्वकम् । कोष्ठम्—उदरम् । जातवेदसम्—अग्निम् । पराञ्चन्ति—परावृत्य गच्छन्ति परावर्तन्ते ।

## अष्टादशः पाठः ।

समालम्भनहस्ता—समालम्भनं ( विलेपनं अलंकरणं वा ) हस्ते यस्याः सा । ( ष. ब. ) शिखामज्जिता—शिखायां मज्जिता । ( स. त. ) ( bathed over head ). प्रतिष्ठितनीवारहस्ताभिः—प्रतिष्ठिताः ( निहिताः ) नीवाराः येषु, एतादृशा हस्ताः यासां ताभिः । ( ष. ब. ) स्वस्तिवाचनिकाभिः—स्वस्ति इति वदन्तीभिः ( तापसीभिः । ) जाते—पुत्रि । गौतमीवर्जम् गौतमीं वर्जयित्वा ( leaving गौतमी i. e. except गौतमी ) । हला—सखे ( 'हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति'। इत्यमरः ) विप्रकार्यते—विकृतं क्रियते । ( is spoiled )

१. केनचित् तरुणा इन्दुवत् पाण्डु ( श्वेतं ) माङ्गल्यम् ( मङ्गलकारकं ) क्षौमं ( दुकूलं—silk ) आविष्कृतम् ( दर्शितम् दत्तं वा । ) केनचित् चरणयोः उपभोगः ( रञ्जनादिः—smearing ) तत्र सुलभः ( योग्यः ) लाक्षारसः ( a red dye ) निष्ठ्यूतः ( दत्तः । ) अन्येभ्यः ( अन्यवृक्षेभ्यः ) पर्वणः ( joint ) भागम्—तं मर्यादीकृत्य आपर्वभागं ( with the portions of the hand coming out upto the joints ) उत्थितैः वनदेवताकरतलैः आभरणानि दत्तानि इत्यन्वयः । किसलयानां ( कोमलपल्लवानां ) उद्भेदः ( उद्गमः ) तस्य प्रतिद्वन्द्विभिः ( प्रतिस्पर्धिभिः । ) ( ष. त. ). ( emulating the hue of tender sprouts of trees ) अभ्युपपत्त्या—अनुग्रहेण । ( with favour ) अभिषेकोत्तीर्णाय—अभिषेकात् उत्तीर्णाय ( उत्थिताय । ) ( पं. त. ) अनुपयुक्तानि ( अधृतानि ) भूषणानि येन सः । ( तृ. ब. ) चित्रकर्मपरिचयेन—by our knowledge of the art of painting.

## नवदशः पाठः ।

१. कूलोपान्तविचरन्न्यङ्कु—कूलस्य ( तीरस्य ) उपान्ते ( समीपे ) विचरन्तः ( भ्रमन्तः ) न्यङ्कवः ( हरिणविशेषाः ) यस्मिन् तत् । ( स. ब. )

२. तदालोकनजन्मना ( तपोवनदर्शनात् उत्पन्नेन ) कुतूहलेन अलं हृतं ( अत्यन्तं आकृष्टं ) तं मध्यमलोकस्य ( पृथिव्याः ) पतिं ( राजानं ) रमाङ्गदः ( तस्य सचिवः ) जगाद ( अवदत् ) इत्यर्थः ।

३. इयं आश्रमभूः ( आश्रमभूमिः ) मैथिलीव ( सीता इव ) कामपि ( अवर्णनीयां ) श्रियं ( शोभां ) धत्ते ( धारयति ) ।

| | मैथिली | आश्रमभूः |
|---|---|---|
| सतीति शब्दस्य सीमा— | अतिसाध्वी । | अतिरुचिरा । |
| सकुशाङ्का— | कुशाभिधः सुतः अङ्के यस्याः सा । | कुशाः ( दर्भाः ) अङ्कः यस्याः सा(दर्भयुक्ता । ) |
| अल्पपल्लवा— | अल्पः पल्लवः ( वस्त्राञ्चलः ) यस्याः सा । | अल्पानि ( मृदूनि, लघूनि ) पल्लवानि यस्याः सा । |

४. हविर्धूमलतालास्यप्रदाः—हविषां धूमः एव लता, तस्यै लास्यं ( नर्तनं ) प्रददाति ( शिक्षयति ) इति । ( कृ. वृ. ) पुरोडाशः—हविः । ( offering to fire )

५. हेमवल्कलाः—हेम्नः ( सुवर्णस्य ) वल्कलानि येषां ते । ( ष. ब. ) उन्निद्रहेमपद्मानि-उन्निद्राणि ( विकसितानि ) हेमपद्मानि ( सुवर्णकमलानि ) येषु तानि । ( स. ब. )

६. काकपक्षाङ्कमूर्धानः—काकपक्षाणां ( शिखण्डकानां ) अङ्काः ( चिह्नानि ) येषु ते । ( स. ब. ) काकपक्षाङ्काः मूर्धानः येषां ते । ( ष. ब. ) बटवः हस्तेन समिधः खण्डयन्ति, मुखेन च वेदवाक्यानां पदानि खण्डयन्ति ( वियोजयन्ति । )

८. गण्डलेखाम्—गण्डस्थलम् । हरिः—सिंहः ।

९. प्रभामण्डलपर्यस्तः—प्रभायाः मण्डलं ( तेजोवलयं ) तेन पर्यस्तं ( दूरं क्षिप्तं ) तमः यैः ते । ( तृ. ब. ) पातालरवयः—यथा भूवलयस्थितानां जनानां

रवयः आकाशे दृश्यन्ते तथैव पातालस्थितानां जनानां रवयः एते महर्षयः तव पथि ( मार्गे ) आपतन्ति ( वर्तन्ते ) इत्यर्थः ।

१०. कपिलाभिः ( रक्तवर्णाभिः ) गोभिः ( धेनुभिः ) अलङ्कृतम् । अभितः–परितः । ( surrounding ) शिरः–मस्तकम् ।

११. गात्रपरावृत्तिभग्नास्थिपरुषेतरान्–गात्राणां ( अवयवानां ) परावृत्तिः ( चालनं ) तेन भग्नानि अस्थीनि येषां, अत एव परुषेतरान् ( मृदून् ) शय्या-कुशान् । ( bed of grass )

१२. यथा दिवाकरः ( सूर्यः ) सन्ध्यया, तथा अयं ऋषिः धेनुना अनुगम्यते ।

१३. भवतात्–भवेत् । प्रत्युटजं–उटजे उटजे इति । ( अ. )

१४. कौतुकोत्तानितेक्षणाः–कौतुकेन उत्तानितानि ( विकसितानि ) ईक्षणानि यासां ताः । ( ष. ब. )

१५. सविधवर्त्मनि–समीपमार्गे ।

पृथ्वीशशाङ्केन–पृथ्वीं आगतः शशाङ्कः तेन । ( शशाङ्कवत् आल्हादकः एषः नृपः इति भावः । )

## विंशः पाठः ।

दुर्निवारभुजप्रतापनिर्जितारातेः–दुर्निवारः यः भुजप्रतापः तेन निर्जिताः अरातयः ( शत्रवः ) येन सः, तस्य । ( तृ. ब. ) ललनाजनमण्डनायमाना–ललनानां जनः ( समूहः ) तस्य मण्डनं ( भूषणं ) इव आचरतीति सा । सम्मदविकसिताननः–सम्मदेन ( आनन्देन ) विकसितं ( प्रफुल्लं ) आननं ( मुखं ) यस्य सः । ( ष. ब. ) पञ्चषमासदेशीयेन–पञ्च वा षट् वा पञ्चषाः, ईषत् न्यूनाः पञ्चषाः मासाः यस्य सः, तेन । ( ष. ब. ) आमयः–रोगः । कालवशमुपजग्मतुः–पञ्चत्वं अगच्छताम् । कीटकोत्कीर्णनिःसारवंशवत्–कीटकैः उत्कीर्णः ( उल्लिखितः ) अत एव निःसारः ( लघुः ) यः वंशः तस्य सदृशम् । ( ष. त. )

सपदि अभिपत्य—attacking instantly. परिरुरुधुः—besieged. आत्मसात्–स्वाधीनम् । अवस्कन्द्य–आक्रम्य । मातृनिर्विशेषया–मातुः अपेक्षया निर्गतः विशेषः यस्याः सा तया, मातृसदृशया इत्यर्थः । अपवाहितः–दूरं नीतः । व्यतिकरे–प्रसङ्गे । कामयमाना–इच्छन्ती ।

प्रच्छायशीतलस्य–प्रकृष्टाः छायाः प्रच्छायं ( 'छायाबाहुल्ये' इत्यनेन नपुंसकैक-

वचनम् ।) तेन शीतलः तस्य । अञ्चलेन–border or end. प्रावृत्य–आच्छाद्य । ग्राहः–मकरः । अशरणा–अनाथा । तदात्वे एव–तस्मिन्नेव काले । प्राणैः व्यहीयत–पञ्चत्वं गता, ममार इत्यर्थः । विहायसम्–आकाशम् । पुलिन्दाः–शबराः । आखेटविहारम्-आखेटस्य ( मृगयायाः ) विहारं ( क्रीडाम् )। आकुलाकुलः–आकुलेभ्यः अपि आकुलः, अतिदुःखितः इत्यर्थः । प्रीतिविस्फारितेक्षणः–प्रीत्या विस्फारिते ( विकसिते ) ईक्षणे यस्य सः । ( ष. ब. )

## एकविंशः पाठः ।

पाटवम्–कौशल्यम् । मध्याह्नसहस्रकरकिरणजालतापतप्तः–अह्नः मध्यं मध्याह्नः । सहस्रं कराः यस्य सः । ( सूर्यः ) मध्याह्ने स्थितः सहस्रकरः–तस्य किरणाः–तेषां जालं–तस्य तापः–तेन तप्तः । ( तृ. त. ) क्षीरतरुः–वटवृक्षः । कृष्णसारः–कृष्णमृगः । उत्तरीयम्–वस्त्रम् । भसितम्–भस्म । प्रणयगर्भाम्–प्रेमपूर्णाम् । दृक्–दृष्टिः । अनुयोक्तुम्–प्रष्टुम् । प्रत्याययति–विश्वासमुत्पादयति–ज्ञापयति–बोधयति वा । अभिजातत्वम्–कुलीनत्वम् । अवयवसन्निवेशाः–अवयवानां रचनाः । प्रणिधानेन–चित्तैकाग्र्येण । साक्षात्कृत्य–दृष्ट्वा । व्यापत्तिम्–misfortune or disease or death. उन्मेषम्–opening or flash. उदन्तम्–वृत्तान्तम् । सुप्तोत्थितः–आदौ सुप्तः पश्चात् उत्थितः । ( क. ) पित्र्यपदासादनोपायः–पितुः इदं पित्र्यं, पित्र्यं च तत् पदं च, तस्य आसादनम् ( प्राप्तिः )–तस्य उपायः । ( ष. त. )

## द्वाविंशः पाठः ।

१. सदा अवगाहाय ( स्नानाय ) क्षमः ( युक्तः ) वारिसञ्चयः यस्मिन् सः । ( स. ब. ) ( 'युक्ते क्षमं शक्ते हिते त्रिषु ।' अमरः । ) निदाघकालः–ग्रीष्मकालः ।

२. शशाङ्कक्षतनीलराजयः–शशाङ्केन ( चन्द्रेण ) क्षताः ( दूरीकृताः ) नीलराजयः, यासां ताः निशाः । ( ष. ब. ) जलयन्त्रमन्दिरम्-जलयन्त्रेण ( fountain ) युक्तं मन्दिरम् । जनस्य सेव्यतां यान्ति–उपभोगयोग्यानि भवन्ति ।

३. प्रवासिभिः भूमिः द्रष्टुमपि न शक्यते। अर्थात् तत्र गमनं तु दूरमेव ।

४. महत्या तृषा परिशुष्काः तालवः येषां ते ( ष. ब. ) मृगाः । भिन्नेन

अञ्जनेन सन्निभं ( तुल्यं ) नभः ( आकाशं ) वीक्ष्य तोयमिति शङ्कया वनान्तरं प्रधाविताः ।

५. हतविक्रमोद्यमः–हतः विक्रमस्य उद्यमः यस्य सः । ( ष. ब. ) विदारितं–विवृतम् । मृगेश्वरः ( सिंहः ) अदूरे ( समीपे ) वर्तमानान् गजान् न हन्ति ।

६. विशुष्कात् कण्ठात् उद्गताः ( बहिर्गताः ) ये शीकराः ( अम्बुकणाः ) ते एव अम्भः येषां ते । ( ष. ब. ) भानुमतः ( सूर्यस्य ) गभस्तिभिः ( किरणैः ) अभितापिताः । ( तृ. त. ) प्रवृद्धया तृष्णया उपहताः ( पीडिताः । ) ( तृ. त. ) एतादृशाः दन्तिनः ( गजाः ) केसरिणः ( सिंहात् ) अपि न बिभ्यति ।

७. अवाङ्मुखः–अवाग् ( अधः ) मुखं यस्य सः । ( ष. ब. ) जिह्मगतिः–वक्रगतिः । फणी ( सर्पः ) मयूरस्य तले निषीदति ( उपविशति । )

८. हुताग्निकल्पैः–हुतः चासौ अग्निश्च–तत्कल्पैः ( तत्सदृशैः । ) ( त. बृ. ) ( प्रचण्डैः इत्यर्थः । ) कलापिनः ( मयूराः ) कलापचक्रेषु ) बर्हमण्डलेषु ) निवेशिताननं भोगिनमपि ( सर्पमपि ) न घ्नन्ति ।

९. तीक्ष्णतराः अंशवः ( किरणाः ) तेषां माला वर्तते यस्य तेन । ( त. ब. ) विवस्वता ( सूर्येण ) अभितापितः भेकः । आतपत्रं ( छत्रं ) तस्य तले निषीदति । भोगिनः–( 'उरगः पन्नगो भोगी ।' अमरः । )

१०. रविप्रभया उद्भिन्ना ( निर्गता ) शिरोमणेः प्रभा यस्य सः । ( ष. ब. ) विलोलेन–चञ्चलेन । तृषाकुलः फणी मण्डूककुलं न हन्ति ।

## त्रयोविंशः पाठः ।

आधातारः–कर्तारः । सम्पद्यन्ते–भवन्ति । समसंस्थितस्य–समानावस्थस्य । स्थूणानिखननन्यायेन–स्थूणा–स्तम्भः । यथा स्थूणा असकृत् सञ्चाल्य निखननेन दृढा भवति तथा विपन्निवारणाय यः परमुखं प्रेक्षते स समधिकमेव विपदि निमज्जति । सौरभस्य–सुगन्धस्य । पयसः कृते–दुग्धार्थम् । आत्मनिर्विशेषं–आत्मनः निर्गतः विशेषः यस्मिन् कर्मणि यथा स्यात् तथा । ( अ. ) स्वप्राणसदृशमित्यर्थः । निदानम्–कारणम् । नीवापोदकम्–मृताय दीयमानं पिण्डं जलाञ्जलिं च । परस्तात्–परलोके । अभिसन्धाय–मनसि कृत्वा । पर्यवस्यति–फलिष्यति, फलति ।

## चतुर्विंशः पाठः ।

( यदा कैकेय्या वचनाद् रामो वनमगच्छद् दशरथश्च मृतस्तदा मातुलगृहाद् भरतमानेतुं दूतः प्रहितः । तेन सहागच्छन् भरतो मध्येमार्गं दैवतगृहं प्रविश्य तत्र स्थिता इक्ष्वाकुकुलोपरतानां नृपाणां प्रतिमा आलोकयन् स्वपितुर्निधनमवगच्छति । )

प्रहरणम्–आयुधम् । क्रियामाधुर्यम्–शिल्पसौन्दर्यम् । भावगतिः–expression. दैवतोद्दिष्टानाम्–प्रतिमात्वेन सङ्कल्पितानाम् । मानुषविश्वासता–having exact resemblance to the man. चतुर्दैवतः–चत्वारि दैवतानि अवयवाः यस्य–स तथाभूतः । ( ष. ब. ) स्तोमः–प्रतिमासमूहः ।

१. दैवतमित्येव–दैवतम् इदं इति बुद्ध्या । अयं प्रणामः । अमन्त्रार्चितदैवतः–अमन्त्रं ( विना मन्त्रेण ) अर्चितं ( पूजितं ) दैवतं यस्मिन् सः । ( स. ब. ) वार्षलः–वृषलेन ( शूद्रेण ) कृतः–तादृशः ।

देवकुलिकः--देवगृहपूजकः । नैत्यकावसाने--नित्यकर्मणः ( देवपूजादेः ) अवसाने ( समाप्तौ । ) प्राणिधर्मम्–भोजनम् । अल्पान्तराकृतिरिव–समानाकृतिरिव ।

२. अस्मासु किंचित् वक्तव्यम् ( दूषणम् ) अस्ति किम् ( येन मया कृतः प्रणामः न स्वीक्रियते । ) अथवा विशिष्टः–( विशेषेण शिष्टः ) मदपेक्षया उत्कृष्टः कोऽपि अन्यः जनः प्रतिपाल्यते ( प्रतीक्षते । ) अथवा नियमप्रभविष्णुता–आत्मनः तपोनुष्ठानप्रौढिः इयम्, येन मत्प्रणामस्य प्रतिषेधः क्रियते । अत्रभवन्तः–एते पूज्याः ।

३. असुरपुरवधे–त्रिपुरासुरवधे ।

अभिसरीम्–साहाय्यार्थं अभिगमनम् । सपुरजनपदाः--पुरजनपदसहिताः स्वसुकृतैः शक्रलोकं ( इन्द्रलोकं, स्वर्गं ) यान्ति । छन्दं मृगयता–एतेषां इक्ष्वाकूणां इच्छां प्रतिपालयता । कृत्स्नाम्–सर्वाम् । मृत्युना चिरं ( दीर्घकालं ) ये अनवसिताः ( अनाशिताः ) सन्ति ।

मया महत् फलमासादितम्–महापुरुषप्रतिमावलोकनरूपं महत् फलम् ।

सन्निहितसर्वरत्नस्य–सन्निहितानि सर्वरत्नानि यस्मिन् सः तस्य । ( स. ब. )

प्रज्वलितः धर्मरूपः प्रदीपः येन सः । ( तृ. ब. ) धर्मः एव परं अयनं ( स्थानं ) यस्य सः तस्मै ( ष. ब. ) धर्मनिरताय इत्यर्थः ।

संवेशनोत्थापनयोः–संवेशने ( शयनवेलायां ) उत्थापने च ( उत्थानवेलायां ) च । ( द्वं. ) रक्षाम्–protection. निर्वेदः–disgust; lack of desire. नित्यावभृथस्नानप्रशान्तरजाः–नित्यम् अवभृथस्नानैः ( यज्ञदीक्षाभिषेकैः ) प्रशान्तं रजः ( दुःखं ) यस्य सः । ( ष. ब. ) धरमाणानाम्–सजीवानाम् । अतिक्रान्तानाम्–मृतानाम् । स्त्रीशुल्कः–विवाहकाले स्त्रियै देयतया पणितं द्रव्यम् । प्रत्यागत्य संज्ञां लब्ध्वा । सकामं भव–इष्टार्थं लभस्व । शुद्धिं नेतव्यः–to be purified. उपरतः–मृतः । अटवीभूताम्–अरण्यतुल्याम् । पिपासार्तः–तृषितः ।

## पञ्चत्रिंशः पाठः ।

१. दमयन्त्यलाभेन कुपितः कलिर्द्वापरेण सह संमन्त्र्य मणिमयं विहङ्गमरूपं धृत्वा दमयन्त्याः सकाशान्नलं वियोजयितुं विपिने तयोर्दृष्टिपथमाययौ । तद्विहङ्गमद्वन्द्वं दृष्ट्वा तद्ग्रहणाय दमयन्ती नलं प्रेरयामास । विहगानुसारेण दूरं गतमन्तर्हितं च नलं ज्ञात्वा वियोगविक्लवा दमयन्ती विललाप । सा वदति ।

२ उभौ पतत्रिणौ ( विहङ्गमौ ) परिगृह्य ( गृहीत्वा ) त्वमसि इति मे ( मया ) प्रतिपन्नम् ( ज्ञातम् ) एव ।

४. अकाण्डकौतुकैः–अकाण्डे ( abruptly; unexpectedly ) कौतुकैः ( कुतूहलैः । ) खेदनिःसहौ–खेदं सोढुमसमर्थौ ।

५. परिधूसरीकृतम्–मलिनीकृतम् । सुधानिधेः–चन्द्रस्य ।

६. वलितक्लमम्–वलितः ( वृद्धिंगतः ) क्लमः ( खेदः ) यस्मिन् तत् । ( स. ब. )

८. सभया–भयाक्रान्ता, भीतभीता ।

९. अन्यवधूचितम्–सामान्यवध्वा उचितम् ।

१०. गिरः–वाचः । निगदन्ती–भाषमाणा ।

११. इमौ विहङ्गमौ मां प्रतार्य ( वञ्चयित्वा ) मे दयितं ( वल्लभं–नलं ) तिरयाम्बभूवतुः ( अन्तर्हितं चक्रतुः । )

१२. सप्तसमुद्रमुद्रिता–समुद्रवलयाङ्किता । अक्षमायते–असमर्थो भवति ।

१४. तरिः—नौका ।

१५. पणीकृता—used as wager. दीव्यता—द्यूतेन क्रीडता ।

१७. दमस्वसा—दमस्य स्वसा—दमयन्ती ।

१८. रुषम्—कोपम् ।

१९. अविषह्यविपाकजृम्भितम्—अविषह्यः ( सोढुं अशक्यः ) विपाकः ( परिणामः ) तेन जृम्भितम् ( वर्धितम् । ) ( तृ. त. )

२०. तपस्विनीष्वपि—दीनासु अपि । प्रथमोदाहरणत्वमानयः—प्रथमोच्चारणीया विहिता ।

२३. परलोकजुषः—परलोकं ( स्वर्गं ) जुषन्ते ( सेवन्ते, गच्छन्तीत्यर्थः ) तान् । ( क्र. वृ. ) विहास्यति—त्यक्ष्यति ।

२४. विपदां निबन्धनम्—विपदां ( दुःखानां ) निबन्धनं ( कारणम् । ) ( ष. त. ) सिंहिकासुतः—राहुः । दर्शतिथेः—अमावास्यायाः ।

## षड्विंशः पाठः ।

पुरूरवसः सङ्गमनीयो नाम मणिः केनापि गृध्रेणापहृतः । तदा वाणपथातीतं तं गृध्रं वीक्ष्य सायं निवासवृक्षाश्रयिणं तं विहगं विचिनुतेति सर्वत्रोद्घोष्य स नृपतिर्विदूषकेण सह सँल्लापं कुर्वन् स्थितः । अत्रान्तरे केनापि स गृध्रः शरेण हतः । अयं स शरोऽयं च स मणिरिति कथयन् कञ्चुकी प्राप्तः । ततः शरे स्थितानि नामाक्षराणि वाचयित्वोर्वशीकुमारस्यायं शर इति राज्ञा ज्ञातम् । इत्थं गते कापि तापसी तमेव कुमारं गृहीत्वा प्रविशति ।

गृध्रलक्ष्यवेध्यर्धनाराचः—गृध्र एव लक्ष्यं तद्विध्यतीति गृध्रलक्ष्यवेधी—अर्धः ( अर्धचन्द्राकृतिः ) नाराचः ( बाणः । ) ( क. )

१. वाष्पायते—वाष्पमुद्वमति—अश्रुपूर्णा भवतीत्यर्थः । वात्सल्यस्य ( प्रेमातिशयस्य ) बन्धोऽस्यास्तीति । प्रसादः—प्रसन्नता । वेपथुः—कम्पः । अदयम्—अशिथिलम् । परिरब्धुम्—आलिङ्गितुम् ।

२. हार्दम्—प्रेम । उत्सङ्गे ( अङ्के ) वर्धितानां पुत्राणां पितृषु कीदृशः स्नेहो भवेत् ।

अभिविनीतः—शिक्षितः । आश्रमविरुद्धम्—आश्रमजनानामनुचितम् । निर्यातय—प्रत्यर्पय ।

३. सर्वाङ्गीणः–सर्वाङ्गव्यापी । चन्द्रकरः–चन्द्रस्य किरणः । शाखामृगः–वानरः । संयम्यमानशिखण्डकः–संयम्यमानः ( बध्यमानः ) शिखण्डकः ( शिखा ) यस्य सः । ( ष. ब. )

४. स्नेहेन ( प्रेम्णा ) प्रस्रवः ( दुग्धस्याभिस्यन्दनं ) तेन निर्भिन्नं ( नितरां भिन्नं–आर्द्रीभूतम् ) स्तनांशुकम् ( स्तनयोरुपरि वर्तमानं वस्त्रं ) उद्वहन्ती ( धारयन्ती । )

कवचहरः–कवचधारणक्षमः । अवितृष्णा–न विगता तृष्णा यस्याः सा ( ष. ब. ) साभिलाषा । पूर्वस्मिन्नाश्रमे–ब्रह्मचर्याश्रमे । द्वितीयं–गृहस्थाश्रमम् ।

## सप्तविंशः पाठः ।

अर्थी–याचकः । कुण्डलयोः अर्थेन–कुण्डले प्राप्तुम् अथवा कुण्डलयोः हेतुना । पिनद्धे–धारिते । विमृश्य–विचार्य । नियतम्–निश्चितम् । उपस्पृष्टम्–जलेन क्षालितम् । प्राङ्मुखः–प्राचि ( पूर्वस्यां दिशि ) मुखं यस्य सः । ( ष. ब. ) खानि–इन्द्रियाणि । सुभृशम्–अतीवाग्रहेण । अप्रमत्तः–प्रमादमकृत्वा । ( unmistakably ) सुनिर्वृता–निश्चिन्ता । क्रियतां क्षण इति–मया क्रियमाणे श्राद्धे क्षणः ( मत्प्रार्थनास्वीकारः ) कर्तव्यः । यथोपपन्नेन–तस्मिन् काले विद्यमानेन ।

## अष्टाविंशः पाठः ।

१. मध्यङ्गतम्–व्योममध्यं तारामध्यं च प्राप्तम् । अंशुमन्तम्–चन्द्रम् । वितानम्–ceiling ( छत इति महाराष्ट्रभाषायाम् । ) उद्वमन्तम् ( सर्वत्र क्षिपन्तम् ) चन्द्रं सः ( मारुतिः ) ददर्श । भानुमन्तम्–किरणवन्तम् । गोष्ठे-गोनिवासस्थाने ।

२. समेधयन्तम्–वर्धयन्तम् । विराजयन्तम् शोभायुक्तं कुर्वाणम् । अभियान्तम्–आकाशे उपरि उपरि गच्छन्तम् ।

४. राजतपञ्जरस्थः–रजतस्य इदं राजतम् ( रौप्यमयं ) तस्मिन् रौप्यमय-पञ्जरे तिष्ठतीति ।

५. ककुद्मान्–वृषः । जाम्बूनदम्–सुवर्णम् । ( 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ।' अमरः । ) । परिपूर्णशृङ्गः–पूर्णेन्दुः ।

६. विनष्टः शीताम्बुतुषाराणां पङ्कः यस्य सः । ( ष. ब. ) शिशिरऋतोः

निर्गतत्वात् । महाग्रहस्य ( सूर्यस्य ) ग्राहेण ( किरणसंक्रमेण ) विनष्टः पङ्कः ( तमः ) यस्य सः । ( ष. ब. ) प्रकाशकान्त्याः आश्रयेण निर्मलः ( स्वच्छः ) अङ्कः ( कलङ्कः ) यस्य सः । ( ष. ब. )

८. प्रकाशमानः यः चन्द्रोदयः तेन नष्टः दोषः ( तिमिरजः ) यस्य सः । ( ष. ब. ) प्रवृद्धः रक्षसां पिशिताशानां ( पिशाचानां ), च दोषः ( त्रासः ) येन सः । ( तृ. ब. ) ईरितः ( निरस्तः ) चितदोषः येन सः । ( तृ. ब. ) स्वर्गेऽपि प्रकाशः ( ख्यातिः ) यस्य सः । ( ष. ब. )

## नवविंशः पाठः ।

अवलेपम्—गर्वम् । एकान्ततः–निश्चयेन । कामयसे–इच्छसि । प्रेमभरमन्थरेण–प्रेमातिशयनिश्चलेन । व्याप्तृतः–आसक्तः ( कृषिकर्म कुर्वन् इत्यर्थः )। एकतानमनाः–एकाग्रचित्तः–समाहितचित्तः । ( concentrated in )

## त्रिंशः पाठः ।

निमित्तम्—अशुभस्य लक्षणम् ।

स्पन्दसे–स्फुरसि । मनोरथाय नाशंसे–मनोरथस्य ( शकुन्तलाप्राप्तेः ) आशंसापि नास्ति । पूर्वं अवधीरितम्–तिरस्कृतम् । परिवर्तते–प्रत्यागच्छति । अभूमिरियमविनयस्य–अत्र अविनयो न कदापि द्रष्टव्यः ।

अवुध्यमानः– curbed, checked. अबालसत्त्वः—अबालस्य ( प्रौढपुरुषस्य ) सत्त्वं ( बलं ) यस्य सः । ( ष. ब. ) आमर्दैन ( आकर्षणेन ) क्लिष्टाः ( disordered ) केसराः यस्य तम् । ( ष. ब. )

अपत्यनिर्विशेषाणि–अपत्यसदृशानि । स्थाने खलु...नामधेयोऽसि–ऋषिजनैः सर्वदमन इति यत्तव नामधेयं कृतं तत् सर्वथा योग्यमेव । लङ्घयिष्यति–तवोपद्रवं करिष्यति । अधरं दशयति–अधरदर्शनेन परिहासं सूचयति । ( ridicules ) एधापेक्षः–एधः ( इन्धनं ) तस्य अपेक्षा यस्य सः । ( ष. ब. ) अनिमित्तहासैः–अकारणहासैः । दन्ताः मुकुलाः ( buds ) इव ते दन्तमुकुलाः । ईषद् लक्ष्याः ( दृश्याः ) दन्तमुकुलाः येषां ते तान् । ( ष. ब. ) अव्यक्ताः वर्णाः यासु ताः, अत एव रमणीया वचःप्रवृत्तयः ( वचनानि ) येषां तान् । ( ष. ब. ) अङ्के यः आश्रयः ( स्थितिः ) तत्र प्रणयः

( प्रीतिः ) येषाम् तेषाम् । ( ष. ब. ) एतादृशान् तनयान् वहन्तः ( धारयन्तः ) जनाः धन्याः ।

दुर्मोकहस्तग्रहेण–दुःखेन मोचयितुं शक्यः दुर्मोकः, हस्तेन ग्रहः हस्तग्रहः, दुर्मोकः हस्तग्रहः यस्य सः तेन । ( ष. ब. ) प्रक्रान्तम्–आरब्धम् ॥ शकुन्तलावण्यम्–शकुन्तस्य ( पक्षिणः ) लावण्यं ( शोभाम् । ) ( ष. त. ) रक्षाकरण्डकम्–रक्षणार्थं कल्पिता ( मन्त्रिता ) पेटिका । प्रत्याययति–निश्चयेन दर्शयति ।

## एकत्रिंशः पाठः ।

१. तत्र–अलकानगर्याम् । धनपतिः कुबेरः । सुरपतिधनुश्चारुणा–इन्द्रचापवत् सुन्दरेण ( मणिमयत्वात् ) मदीयं आगारं ( गृहं ) वर्तते इत्यन्वयः । यस्य गृहस्य उपान्ते ( पार्श्वदेशे ) मे कान्तया वर्धितः कृतकतनयः ( पुत्रत्वेन अभिमन्यमानः ) हस्तेन प्राप्यैः स्तवकैः ( गुच्छैः ) नमितः ( तृ. त. ) बालश्चासौ मन्दारवृक्षश्च ( क. ) ( देवतरुः ) अस्ति ।

२. मरकतशिलाबद्धसोपानमार्गा–मरकतशिलाभिः ( emerald stones ) बद्धः सोपानमार्गः यस्याः सा । ( ष. ब. ) वैदूर्यवत् स्निग्धानि नालानि ( the stem of a lotus ) येषां तैः । ( ष. ब. ) हैमैः ( सुवर्णमयैः ) छन्ना ( खचिता ) एतादृशी वापी अस्तीति अन्वयः । यस्याः तोये कृतवसतयः हंसाः त्वां ( मेघं ) अपि प्रेक्ष्य व्यपगतशुचः ( नष्टशोकाः ) भवन्ति । सन्निकृष्टं मानसं न ध्यास्यन्ति ( न स्मरिष्यन्ति । )

३. पेशलैः–चारुभिः । उपान्तस्फुरिततडितं–उपान्तेषु स्फुरिताः तडितः यस्य तम् । ( ष. ब. ) एतादृशं त्वां ( मेघं ) प्रेक्ष्य, तमेव ( क्रीडाशैलमेव ) मद्गेहिन्याः ( मम भार्यायाः ) प्रियः इति स्मरामि ।

४. कुरबकाः एव वृतिः ( आवरणं ) यस्य तस्य । ( ष. ब. ) माधवीलतामण्डपस्य । प्रत्यासन्नौ–नातिदूरौ । चलाः ( चञ्चलाः ) किसलयाः ( कोमलपल्लवाः ) यस्य सः ( ष. ब. ) रक्ताशोकः । कान्तः–सुन्दरः । केसरः–बकुलः । मया सह एकः तव सख्याः ( मे प्रियायाः ) वामपादाभिलाषी । अहं स वृक्षश्च प्रियायाः पादाघातं इच्छावः इत्यर्थः । [ 'प्रमदायाः पादाघातेन अशोकः विकसति' इति प्रसिद्धम् । ] अन्यः

केसरवृक्षः ( अहं च ) दोहदस्य ( पुष्पादीनां उत्पादकद्रव्यस्य ) छद्मना ( व्याजेन ) ( मे प्रियायाः ) वदनमदिरां ( वदने धृतां मदिरां, गण्डूषमद्यं ) काङ्क्षति ( अभिलषति। ) बकुलस्य गण्डूषमद्यं दोहदं इति प्रसिद्धम्।

५. तन्मध्ये–तयोर्वृक्षयोः मध्ये। अनतिप्रौढानाम् ( कोमलानां ) वंशानां प्रकाशः इव प्रकाशः येषां तैः ( ष. ब. ) मणिभिः मूले बद्धा स्फटिकफलका ( स्फटिकमयं पीठं ) यस्याः सा ( ष. ब. ) काञ्चनी वासयष्टिः। शिञ्जा ( भूषणध्वनिः ) ताभिः प्रधानानि वलयानि–तैः सुभगाः ( रम्याः )–तैः तालैः ( करतालिकाभिः ) नर्तितः वः सुहृद् ( सखा ) नीलकण्ठः ( मयूरः ) यां यष्टिकां अध्यास्ते ( अधिवसति। )

६. लिखितवपुषौ–लिखिते वपुषी ( आकृती ) ययोः तौ। ( ष. ब. ) क्षामच्छायम्–क्षामा ( क्षीणा ) छाया ( कान्तिः ) यस्य तत्। सूर्यस्य अपाये ( सूर्ये अस्तंगते ) कमलं स्वां अभिख्यां ( निजशोभां ) न पुष्यति ( न बिभर्ति न प्रकाशयति वा। )

७. सम्पातः–प्रवेशः। कलभतनुतां–कलभस्य ( करिपोतस्य ) तनुः, कलभतनोः भावः कलभतनुता, तां गत्वा ( प्राप्य। ) अल्पाल्पभासं–अत्यल्पप्रकारा भाः ( प्रकाशः ) यस्याः सा। ( ष. ब. ) खद्योतानां आली, तस्या विलसितेन ( स्फुरितेन ) निभां ( समानाम्। ) विद्युदुन्मेषः ( विद्युत्प्रकाशः ) स एव दृष्टिः, ताम्। ( क. ) भवनस्य अन्तः–भवनमध्ये पतितां। कर्तुमर्हसि इत्यन्वयः।

[ The cloud will have a look ( in the form of the flash of lightning ) inside the Yaksha's house. ]

## द्वात्रिंशः पाठः।

सश्रीकतां–शोभाम्। पण्यानि–विक्रेयानि। (to be sold, ) शुल्कम्–( tax ) साधयन्तः ( हरन्तः ) मधुकराः एव पुरुषाः ( राजपुरुषाः प्रविचरन्तीत्यर्थः। ) असंस्काररमणीयम्–अकृत्रिममनोहरम्। प्रग्रहः–( रज्जुः। ) वर्त्मनि ( मार्गे ) उज्झितं ( पतितं ) यत् दारु तेन वारिता ( रुद्धा ) गतिः यस्य सः। ( ष. ब. ) स्वैरं–मन्दं मन्दम्। प्रेरितगोयुगः–प्रेरितं गोयुगं येन सः। ( तृ. ब. ) गुप्तार्यकप्रवहणस्थः–गुप्ततया अवस्थितः आर्यको यत्र एतादृशं प्रवहणं अधितिष्ठतीति। ( कृ. वृ. ) भीतभीतः–भीतादपि भीतः ( अतीव भीत इत्यर्थः। ) निगड–chain. सावशेषां-

पसारः–सावशेषः ( अवशिष्टः ) अपसारः ( पलायनं ) यस्य सः। ( ष. ब. ) साधोः नाम चारुदत्तस्य । कोकिलाः स्वमपत्यजातं काकनीडे स्थापयन्ति। काकाः अपि तत् स्वपुत्रभ्रान्त्या सुतनिर्विशेषं परिपालयन्ति । व्यसनार्णवोत्थितम्– व्यसनं ( संकटं, राजबन्धरूपं ) एव अर्णवः ( सागरः ) तस्मात् उत्थितं ( उत्तीर्णम् । ) ( पं. त. ) निर्वृतिम्–आनन्दम् । यानास्तरणम्–यानस्य ( शकटस्य ) आस्तरणम् ( आच्छादनम् । ) पृथुतरसमवक्षाः–पृथुतरं ( अतिविशालं ) समं वक्षः यस्य सः। ( ष. ब. ) ताम्रलोलायताक्षः–ताम्रे ( रक्ते ) लोले ( चञ्चले ) आयते ( दीर्घे ) च अक्षिणी यस्य सः। ( ष. ब. ) गोपालप्रकृतिः– गोपालजातिः । घोषः–a station of cowherds. सङ्गच्छस्व निगडानि–( चेटं प्रत्युक्तिरियम् । ) त्वं निगडैः बद्धो भव इत्यर्थः। साम्प्रतं वयं...–साम्प्रतं वयं अस्यार्यकस्य स्थाने गच्छामः ( राजा अस्मान् निगडीकरिष्यतीति भावः । ) प्रणयेन–स्नेहेन । प्रत्यग्रापनीतसंयमनस्य–प्रत्यग्रं ( अचिरात् ) अपनीतं ( दूरीकृतं ) संयमनं ( बन्धनं ) यस्य सः तस्य। ( ष. ब. ) लघुसञ्चारा–लघुः सञ्चारः ( गमनं ) यस्यां सा। ( ष. ब. ) स्वात्मापि विस्मर्यते–त्वं मे प्राणेभ्योऽपि अधिकः इति भावः । यत्नोद्यते पालके महती रक्षा वर्तते–पालकः राजा महान्तं यत्नं आतिष्ठति । तेन च सर्वाणि स्थानानि सुरक्षितानि भवन्ति । चारः–a spy. व्यलीकम्–अप्रियम् । पुराणकूपे–जीर्णकूपे ।

## त्रयस्त्रिंशः पाठः ।

शतपथब्राह्मणम्–ब्राह्मणानि वेदवदपौरुषेया गद्यमया निबन्धाः । ऋग्वेदस्यैतरेयं ब्राह्मणम् । शुक्लयजुर्वेदस्य च शतपथब्राह्मणं विद्यते । अस्मिन् यज्ञविधिर्विस्तरेण प्रपञ्चितः ।

स.......धर्मम्–सः प्रजापतिः ( सृष्टिमुत्पाद्य ) नैव व्यभवत् । ( सर्वाः प्रजा न्यायेन वर्तेरन्निति ) न व्यजानात् । तत् ( तस्मात्कारणात् ) श्रेयोरूपं ( कल्याणकारणं ) धर्मं अत्यसृजत् । क्षत्रस्य क्षत्रम्–क्षत्रियाणां क्षत्रियः ( क्षत्रियाणामपि शास्ता ) धर्मः एव । न किमपि तस्मात् परं–श्रेष्ठमस्ति । वाव an explative particle. ऋतम्–सत्यम् । दीक्षा initiation. अनुपदम्–प्रत्येकं पदे । नियमाः, यमाः–शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः । नियमस्तु

स यत्कर्म नित्यमागन्तुसाधनम् ॥ ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्पता । अहिंसा स्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ चन्द्रा–दृढा–इति नपुंसकस्य बहुवचनानि ।

## चतुस्त्रिंशः पाठः ।

१. विलासी चासौ जन्तुश्च तस्य । ( क. ) प्रकृत्या समीरितः–निसर्गेण प्रेषितः प्रोत्साहितः वा ।

२. परम्–श्रेष्ठम् । यदनुक्तमपि ( अकथितमपि ) प्रियस्य साहचर्यं न भजते तत्किं नाम परं मित्रम् । अर्थात्परं मित्रं सर्वदा प्रियस्य मित्रस्य साहचर्यं भजते ।

३. श्रीखण्डशैलः ( मलयगिरिः ) द्युमणेः ( सूर्यस्य ) वियोगात् निश्वासकल्पं ( निश्वाससदृशं ) पवनं जहाति । जडः–अलसः, बुद्धिहीनः, मूर्खो वा । समीशः–सामर्थ्यवान् । वसन्ते सूर्यो दक्षिणायनादुत्तरायणं गच्छति । अतो मलयाचलो वियोगदुःखान्निश्वसिति ।

५. कौबेरकाष्ठाम्–उदीचीं ( उत्तरां ) दिशम् । सूर्यस्य प्रचण्डतेजसः कारण-मुत्तरदिग्गमनमेव ।

६. को नाम सचेतनः प्रतिशात्रवं ( प्रतिस्पर्धित्वं ) ग्रहीतुं न समीहते ( इच्छति । )

७. हिमतीव्रशत्रुम्–हिमस्य तीव्रः ( दृढः ) शत्रुः तम् । ( ष. त. )

८. वनस्थली–अकृत्रिमा वनभूमिः । श्रवणाभ्युपायैः–कर्णयोः उपहारैः ।

९. षडङ्घ्रयः–भ्रमराः । कलम्–मधुरम् ।

१०. समधूनि–मधुसहितानि ।

११. रमणीयताढ्यः–रमणीयतया आढ्यः ( पूर्णः । ) ( तृ. त. )

१२. सुषमाविभातम्–सुषमया ( सौन्दर्येण ) विभातं ( प्रकाशितम् । ) ( तृ. त. ) धूमभभृङ्गयुक्तम्–धूमसदृशैर्भृङ्गैर्युक्तम् । उच्चयः–समूहः ।

१३. नीरं ( जलं ) चुम्बतीति । मलयगिरिपवनः । चारुः वेशः यस्य सः । ( ष. ब. )

## पञ्चत्रिंशः पाठः ।

१. धर्मात्मजः–धर्मस्य ( यमधर्मस्य ) आत्मजः ( पुत्रः ) युधिष्ठिरः । ( ष. त. ) त्रिदशेन्द्रसूनुः–त्रिदशेन्द्रस्य ( इन्द्रस्य ) सूनुः ( पुत्रः ) अर्जुनः । ( ष. त. ) यमौ–twins, नकुलसहदेवौ ।

सदृशमेतद्गान्धारीपुत्रस्य–यथा गान्धारी स्वाक्षिणी पट्टकेन बद्ध्वा न किमपि पश्यति तथैवैष दुर्योधनो लोभान्धः तत्त्वानि न जानाति इत्यर्थः । बाह्याभ्यन्तरे शरीरे–बाह्ये शरीरे अभ्यन्तरे शरीरे च ( मनसि इत्यर्थः । )

२. दायाद्यम्–पितृरिक्थम् । ( ancestral property. )

३. एकदा पण्डुर्मृगयाप्रसङ्गतो वने विचरन् मृगरूपेण मृग्या सह क्रीडन्तं कञ्चन मुनिं बाणेनाहन् । तदा स मुनिः ' पत्नीविलासे त्वमपि मरिष्यसि ' इति तं शशाप इति भारतीया कथा ।

पुराविदं–पुरावृत्तज्ञम् ।

४. विषयी विषयासक्तः । विचित्रवीर्यः क्षयेण विपत्तिं यातः ( मृतः । ) तदा तस्य भार्यायामम्बिकायां व्यासेन जातः ( धृतराष्ट्रः ) ते जनकः कथं राज्यं लभेत इत्यन्वयः ।

६. सहृदयः–with good heart. साहसं–युद्धम् । शान्तमतिभिः ( मुनिभिः ) जुष्टं ( सेवितं ) आश्रमं शमाय ( शान्त्यर्थं ) ( ते पाण्डवाः ) प्रविशन्तु ।

८. तव गुरोः–पितुः ( वसुदेवस्य ) श्यालं–पत्नीभ्रातरम् ।

१०. मगधेश्वरः–जरासन्धः । नयानुगामिनाम्–नीतिमताम् ।

११. गुणेतराः–गुणाः इतरे ( अन्ये ) येभ्यः ते ( दोषाः । ) ( पं. ब. )

१२. पिष्टपेषणम्–पिष्टस्यैव पेषणम् । ( grinding flour ) अत्र ' राज्यं दीयताम् ' इत्यर्थस्य पुनः पुनर्वचनम् । पर्याप्तम्–यथेप्सितम् । छिद्यतां कथा–अस्मात् राज्ययाचनात् विरम्यताम् ।

१४. कैरातं–किरातस्य ( व्याधस्य ) इदं कैरातं वपुः ( शरीरं ) आस्थितः ( आश्रितः ) पशुपतिः ( शङ्करः ) युद्धेन ( युद्धं कृत्वा ) सन्तोषितः । खाण्डवम्–तन्नामकं वनम् । देवेन्द्रार्तिकराः–इन्द्रं पीडयन्तः । निवातकवचाः–असुरविशेषाः ।

१५. चित्रसेनः–गन्धर्वविशेषः । फाल्गुनेन–अर्जुनेन । मोक्षितः–मोचितः ।

१६. गाम्–पृथिवीम् ।

१७. मारुतः–वायुदेवः । भीमरूपी–भीमसेनः । पितृभुक्ते–मम पित्रादिभिः उपभुक्ते । वीर्यगुप्ते–मम वीर्येण रक्षिते । तृणान्तराभिभाषकाः–तृणेन अन्तरं ( व्यवधानं ) येषां ते तृणान्तराः–तृणान्तराः च ते अभिभाषकाः । ( It was an old custom in India that a low born man was addressed by a man of high birth after having kept a blade of grass between. )

१८. हयम्–अश्वरूपं केशिनामानं असुरम् । गोवृषम्–अरिष्टर्षभदानवम् । मल्लान्–चाणूरादीन् ।

पशुखुरोद्धतरेणुरुषिताङ्गः–पशूनां खुरैः उद्धता या रेणुः तया रुषितं ( चर्चितं ) अङ्गं यस्य सः । ( ष. ब. ) व्रजः–गोपालानां वसतिस्थानम् ।

१९. अवधूतपाण्डरातपत्रः–अवधूतं ( धूतं ) पाण्डरं ( शुभ्रं ) आतपत्रं ( आतपात् त्रायते इति । an umbrella ) यस्य सः । ( ष. ब. )

२०. काकः–कटुभाषित्वात् काकः । केकरः–squint-eyed, विकृताक्षः । पिङ्गलः–मर्कटः ।

२१. पशुपकुलनिवासात्–पशुपानां ( गोपालानां ) कुले निवासः तस्मात् । ( स. त. ) आनुजीव्यानभिज्ञः–आनुजीव्यः ( सेवकधर्मः )–तत्र अनभिज्ञः । ( ष. त. )

मवितुकामः–मवितुं ( वक्तुं ) कामः ( इच्छा ) यस्य सः । ( ष. ब. ) माया–miracle, illusory feat. जृम्भक–मायाविन् ।

## षट्त्रिंशः पाठः ।

( रामचन्द्रेण सीतायाः स्वयंवरप्रसङ्गे शिवधनुर्भग्नम् । तदा कोपाविष्टो जामदग्न्यः तेन सह योद्धुमागच्छत् । तद्वर्णनम् । )

१. मौर्वी–धनुषो रज्जुः । ( a grass string. ) शिताग्राः–शितं ( तीक्ष्णं ) अग्रं येषां ते । ( ष. ब. )

धारोज्ज्वलः– धारायां वा धारया वा ( at the edge ) उज्ज्वलः ( दीप्तः ) परशुः। धारया ( जलस्य धारया ) उज्ज्वलः ( कान्तिमान् ) कमण्डलुः। ( तृ. त. ) तद् ( तस्मात् ) वीररसस्य शान्तरसस्य च विकारः किमयं इति विस्मयः।

क्रौञ्चमहीधरस्य–क्रौञ्चगिरेः शिखरं विद्धं–छिन्नम्। हैहयपतेः ( कार्तवीर्यस्य ) उद्दामदोषः ( बलशालिभुजाः ) तेषां काननं ( अरण्यं ) छिन्नम्।

२. इक्षुभञ्जं–इक्षोः भङ्ग इव इक्षुभञ्जम्। बभञ्ज–चूर्णितवान्। रेणुकाकण्ठशत्रुः–रेणुकायाः ( जमदग्नेः भार्यायाः ) कण्ठस्य शत्रुः ( छेदकः ) कुठारः। ( ष. त. ) इयं–मयोक्ता 'समरविजयी भूयाः' इति वाक्। समुदाचारानुसारिणी–शिष्टाचार-युक्ता। वाग्वृत्तिरेव–वचनं एव। मम मनसि न तथा भावः इत्यर्थः।

चण्डीशस्य ( शिवस्य ) कार्मुकविमर्दकः ( धनुर्भङ्गः ) तस्माद् दर्पः ( अहंकारः ) तम् अनेन कठिनेन कुठारेण शातयामि ( छिनद्मि। ) विग्रहः–नाशः। अनुग्रहः–कृपा।

३. पुरवैरिणः–रुद्रस्य। आत्मनैवेदं अभज्यत–स्वयमेवाभज्यत। चन्दन-दिग्धम्–चन्दनेन दिग्धं ( लिप्तम्। ) नाराचः बाणः।

प्रवीरो भव–उद्यतो भव।

इह ( भूलोके ) ध्रुवं ( निश्चलं ) सुखं अथवा प्रेतभर्तुः ( यमस्य ) मुखं सम्पश्यामः।

प्रणतिपात्रम्–प्रणतेः ( नमस्कृतेः ) पात्रम् ( योग्यम्। ) ( ष. त. ) तृणाय मन्यसे–तृणमिव अनादरणीयं मन्यसे। क्षत्रकण्ठविगलदुष्णासृजः–क्षत्राणां ( क्षत्रि-याणां ) कण्ठात् विगलत् यत् उष्णं असृक् ( रुधिरं ) तस्य। यथा जलाञ्जलिना पितृजनास्तर्पयन्ति, तथा अहं तान् रुधिराञ्जलिना तर्पयित्वातोषयमिति भावार्थः। यशोवित्तम्–यशोरूपि वित्तम्। मुधा–व्यर्थम्। वाग्डम्बरपण्डितेषु–वाचां ( वचनानां ) डम्बरः ( pomp, high sounding words ) तस्मिन् पण्डिताः तेषु–युष्मासु। प्रचुराः ( प्रभूताः ) वाणीः ( वचनानि। ) किं नाम प्रयुञ्जे ( किमर्थं योजयामि। ) पद्मासनम्–पद्मं आसनं यस्य सः, तं, ब्रह्माणम्। ब्राह्मीम्–ब्राह्मणसम्बन्धिनीम्। कुलिशकठिनम्–कुलिशमिव ( वज्रवत् ) कठिनम्। त्रैयक्षम्–त्र्यक्षस्य ( शंकरस्य ) इदं इति त्रैयक्षम्। नारायणस्य इदं नारायणीयम्। दोः ( भुजस्य ) विलासः ( लीला। ) चण्डधाम्नः–चण्डं धाम यस्य सः, सूर्यः। ( ष. ब. ) विद्योतसे–शोभसे।

समरक्षमाम्–रणयोग्याम्। क्षमाम्–भूप्रदेशम्।

## सप्तत्रिंशः पाठः ।

अनूच्य–having taught; अध्याप्य । अन्तेवासिनम्–शिष्यम् । अनु (अध्ययनसमाप्तौ) शास्ति (उपदिशति ।) मा प्रमदः–प्रमादं मा कुरु । प्रजातन्तुं मा व्यवच्छेत्सीः–प्रजोत्पादनं कुरु इत्यर्थः । भूत्यै–मङ्गलाय । मङ्गलार्थात् कर्मणः सकशात् प्रमादः त्वया न कर्तव्यः इत्यर्थः । स्वाध्यायप्रवचनाभ्याम्–स्वाध्यायात् (अध्ययनात्) प्रवचनात् (अध्यापनात्) च । मातृदेवो भव–माता देवो यस्य सः । (ष. ब.) अनवद्यानि–अनिन्दितानि । प्रश्वसितव्यम्–श्रमापहारः कार्यः । श्रिया–औदार्येण, सगौरवम् । ह्रिया–लज्जया । भिया–भयेन । संविदा मित्रादिकार्यहेतुना । विकिचित्सा–संशयः । वृत्तविचिकित्सा–वृत्तौ (आचारे) विचिकित्सा (संशयः।) सम्मर्शिनः–विचारवन्तः । युक्ताः–अधिकारिणः । (fit) आयुक्ताः–परैः नियुक्ताः । अलूक्षाः–अरूक्षाः (अक्रूरमतयः ।) आदेशः–विधिः (आज्ञा ।) वेदोपनिषत्–वेदरहस्यम् ।

## अष्टात्रिंशः पाठः ।

१. तदुदितम्–तस्मिन् (वेदे) उदितं (उक्तम् ।) स्वनुष्ठीयताम्–सम्यक् अनुष्ठीयताम् (क्रियताम् ।) अपचितिः–पूजा । काम्ये–काम्यकर्मणि । व्यवसीयताम्–निश्चीयताम् । तूर्णम्–झटिति ।

२. परिचीयताम्–वर्ध्यताम् । अर्थ्यताम्–याच्यताम् । श्रुतिशिरोवाक्यम्–उपनिषद्वाक्यम् ।

३. श्रुतिशिरःपक्षः–श्रुतिशिरःसु (उपनिषत्सु) स्वीकृतः संस्थापितो वा पक्षः (सिद्धान्तः) । अहरहः–प्रतिदिनम् ।

५. परतरे–परब्रह्मणि । चितिबलात्–चितेः ब्रह्मात्मैक्यविचारजनितानुभवस्य बलात् । उत्तरैः–ज्ञानोत्तरैः कर्मभिः । श्लिष् to grasp; to stick to. प्रविलाप्–to let pass.

## नवत्रिंशः पाठः ।

सकलकुलाचलचक्रवर्तिना–सकलाश्च ते कुलाचलाश्च (महान्तः पर्वताः) (महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च परियात्रश्च सप्तैते कुलपर्वताः ।) तेषां चक्रवर्तिना (सार्वभौमेन ।) पूर्वेद्युः–पूर्वस्मिन् दिने ।

औषधिप्रस्थवासिनः– औषधिप्रधानप्रस्थम् ( सानु ) तत्र वसन्तीति अथवा औषधि प्रस्थं नाम हिमवतो राजधानी तत्र वासिनः इत्यर्थः। परिष्क्रियताम्–अलङ्क्रियताम्। सन्नह्यन्ताम्-बध्यन्ताम्। गगनतललिहः–गगनतलं लिहन्ति ( स्पृशन्ति ) इति। ( कृ. वृ. ) केतनानाम्--ध्वजानाम्। वीथयः– रथ्याः ( streets ) विश्वमाङ्गल्यहेतुः–सर्वमङ्गलकारणम्। रम्भास्तम्भपरिष्कृतेषु–रम्भाणाम् ( कदलीनां ) स्तम्भाः, तैः परिष्कृतेषु ( अलङ्कृतेषु। ) ( तृ. त. ) आमन्द्रध्वनयः–आमन्द्राः( गम्भीराः ) ध्वनयः येषां ते। ( ष. ब. ) मूर्छन्ति–विस्तारं लभन्ते। शिञ्जानैः– ( sounding ) शब्दायमानैः। अगरुः--कृष्णचन्दनम्। परम्पराभिः--पङ्क्तिभिः। उन्नद्धम्--उपरिबद्धम्। शतमन्युः ( इन्द्रः ) तस्य शरासनम् ( चापः ) तस्य शोभा। भूरेव पङ्केरुहं ( कमलं ) तस्य कर्णिकायिता ( मध्यकोषायिता ) तनुः यस्य। योक्त्रम्--मन्थनरज्जुः। भुजङ्गराजः– वासुकिः। कषणेन–घर्षणेन। भानुमालिः ( सूर्यः ) तस्य पदवी ( मार्गः ) तत्र जङ्घाला ( जववती ) ( speedy ) भृङ्गाणां आलिः ( पङ्क्तिः ) यस्य सः। ( ष. ब. ) आतोद्यपाणयः–आतोद्यानि ( वाद्यानि ) पाणिषु येषां ते। ( ष. ब. ) उपवीणयितुम्–वीणया गातुम्।

## चत्वारिंशः पाठः।

१. जम्भारिः–इन्द्रः। परिसरेण–पर्यन्ततः। ( near about ) वेधाः–ब्रह्मा। स्वस्त्ययनानि–स्वस्तिसूक्तानि। रौद्रीम्–रुद्रदेवतासम्बन्धिनीम् ( 'त्र्यम्बकं यजामहे' इत्यादयः। ) प्रष्ठाः–अग्रगामिनः।

चटुलम्–मनोहरम्। प्रोत्सारणायाः–जनसम्मर्ददूरीकरणव्यापारस्य। अर्घ्यपाणिः-अर्घ्यं ( पूजाद्रव्यं ) पाणौ–यस्यः सः। ( व्य. ब. )

२. अचार्मणानां अक्ष्णाम्–of sight not made of skin. ( ज्ञानचक्षुषामित्यर्थः। ) अकर्तृकाणां वचसाम्–अपौरुषेयवाक्यानां ( वेदवाक्यानामित्यर्थः। )

६. अतिगुरुचरणक्रमैः heavy foot steps. अवनमितोन्नमितस्थलाम्-नतोन्नतस्थलाम्। ( with ups and downs )

नन्दितः ( आनन्दितः ) नयने एक चकोरः यस्याः सा। ( ष. ब. ) कौमुदी–ज्योत्स्ना। विसरः–समूहः। उत्कूलयति–उत्कण्ठीकरोति।

आविर्मुकुला–प्रकटीभूतकुड्मला । ( with buds shooting forth ) प्रस्विन्नं ( घर्मयुक्तं ) यत् गण्डफलकम् ( कपोलफलकं ) तस्मात् च्युता ( भ्रष्टा ) पत्रलेखा यस्मात् तत् । ( पं. ब. ) धूमस्य अभिषङ्गः ( सम्बन्धः ) तस्मात् गलितं अञ्जनं यस्य तादृशम् । ( ष. ब. ) पाटलं अक्षि यस्मिन् तत् । ( स. ब. ) म्लायत्–fading. वसन्तकुसुमं–वसन्तोद्भवं कुसुमं यस्मिन् तत् । ( स. ब. ) रागमुद्राम्–प्रेममुद्राम् ।

सवित्रोः उत्पादकयोः । भुवनभयभङ्गदक्षः–भुवनस्य यद्भयं तस्य भङ्गे ( नाशे ) दक्षः ( समर्थः । ) ( जगत्पालक इत्यर्थः । ) ( स. त. )

---

# व्याकरणम् ।

## अभ्यासविचारः ।

| स्वरः । | विकारः । | उदाहरणम् । |
|---|---|---|
| अ अथवा आ | अ | या—यया । |
| | | चि—चिचि । |
| इ ,, ई | इ | नी—निनी । |
| उ ,, ऊ | उ | लू—लुलू । |
| ऋ ,, ॠ | अ | सृ—ससृ । |
| ए ,, ऐ | इ | खेल—चिखेल् । |
| ओ ,, औ | उ | लोक्—लुलोक् । |

| व्यञ्जनम् । | विकारः । | उदाहरणम् । |
|---|---|---|
| क् अथवा ख् | च् | कृ—चकृ |
| | | खन्—चखन् । |
| ग् ,, घ् | ज् | गम्—जगम् । |
| | | घस्—जघस् । |
| च् ,, छ् | च् | चर्—चचर् । |
| | | छिद्—चिच्छिद् । |
| ज् ,, झ् | ज् | ज्वल्—जज्वल् । |
| ट् ,, ठ् | ट् | टीक्—टिटीक् । |
| ड् ,, ढ् | ड् | डी—डिडी । |
| त् ,, थ् | त् | तृ—ततृ । |
| द् ,, ध् | द् | दुह्—दुदुह् । |
| | | धा—दधा । |
| प् ,, फ् | प् | पत्—पपत् । |
| | | फल्—पफल् । |
| ब् ,, भ् | ब् | बध्—बबन्ध् । |
| | | भृ—बभृ । |

| व्यञ्जनम्। | विकारः। | उदाहरणम्। |
|---|---|---|
| न् अथवा म् | न्—म् | नम्—ननम्।<br>मुच्—मुमुच्। |
| य् | य् | या—यया। |
| र् | र् | रुच्—रुरुच्। |
| ल् | ल् | लस्—ललस्। |
| व् | व् | वृध्—ववृध्। |
| श् | श् | शंस्—शशंस्। |
| ष् | ष् | |
| स् | स् | सृज्—ससृज्। |
| ह् | ज् | हृ—जहृ। |
| संयुक्तव्यञ्जनम्। | प्रथमाक्षरम् | स्मृ—सस्मृ।<br>द्रुह्—दुद्रुह्। |
| संयुक्तव्यञ्जनम्। (प्रथमाक्षरम् स्, ष्, श्, पश्चाच्च कठोरव्यञ्जनम्) | कठोरव्यञ्जनम् | स्पृश्—पस्पृश्।<br>स्था—तस्था। |

(1) Reduplication means repeating, such as दा when reduplicated becomes दादा. in the reduplication of roots the initial vowel, and if there are more than one, the first together with the initial consonant are reduplicated ( as in roots of 3rd conjugation.)

(2) The radical long vowel becomes short and the redical ऋ becomes अ in reduplication and the short of ए or ऐ is इ and that of ओ or औ is उ.

(3) The second letter in any of the five classes is changed to the first and the fourth to the third in reduplication.

(4) The syllables in the कवर्ग are changed to the corresponding syllables in the चवर्ग, and ह् is changed to ज् in reduplication.

(5) If a root begin with a conjunct consonant, the first member of it only with the vowel is reduplicated; but if the first member is श्, ष्, स् or ह् and the second a hard consonant, the hard consonant is reduplicated.

## ( लिट् । ) द्वितीयभूतः । ( परोक्षभूतः । )–The Perfect tense.

| बुध्—परस्मैपदम् । | | | | बुध्—आत्मनेपदम् । | | |
|---|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | | ए० व० | द्वि० व० | ब० व० |
| बुबोध | बुबुधिव | बुबुधिम | प्र० पु० | बुबुधे | बुबुधिवहे | बुबुधिमहे |
| बुबोधिथ | बुबुधथुः | बुबुध | द्वि० पु० | बुबुधिषे | बुबुधाथे | बुबुधिध्वे |
| बुबोध | बुबुधतुः | बुबुधुः | तृ० पु० | बुबुधे | बुबुधाते | बुबुधिरे |

I. In Perfect the first letter of a root is reduplicated; the reduplicative changes are shown at the beginning.

| परस्मैपदम् । | | | | आत्मनेपदम् । | | | |
|---|---|---|---|---|---|---|---|
| (कृ) | चकार | चक्रतुः | चक्रुः | (कृ) | चक्रे | चक्राते | चक्रिरे |
| (वृ) | ववार | वव्रतुः | वव्रुः | (वृ) | वव्रे | वव्राते | वव्रिरे |
| (भृ) | बभार | बभ्रतुः | बभ्रुः | (भृ) | बभ्रे | बभ्राते | बभ्रिरे |
| (जि)-(गि) | जिगाय | जिग्यतुः | जिग्युः | | | | |
| (नी) | निनाय | निन्यतुः | निन्युः | (नी) | निन्ये | निन्याते | निन्यिरे |
| (चि-(चि-कि) | चिचाय<br>चिकाय | चिच्यतुः<br>चिक्यतुः | चिच्युः<br>चिक्युः | (चि)-(चि-कि) | चिच्ये<br>चिक्ये | चिच्याते<br>चिक्याते | चिच्यिरे<br>चिक्यिरे |
| (दिश्) | दिदेश | दिदिशतुः | दिदिशुः | (दिश्) | दिदिशे | दिदिशाते | दिदिशिरे |
| (द्विष्) | दिद्वेष | दिद्विषतुः | दिद्विषुः | (द्विष्) | दिद्विषे | दिद्विषाते | दिद्विषिरे |
| (क्षिप्) | चिक्षेप | चिक्षिपतुः | चिक्षिपुः | (क्षिप्) | चिक्षिपे | चिक्षिपाते | चिक्षिपिरे |
| (भिद्) | बिभेद | बिभिदतुः | बिभिदुः | (भिद्) | बिभिदे | बिभिदाते | बिभिदिरे |
| (विश्) | विवेश | विविशतुः | विविशुः | (विद्) | विविदे | विविदाते | विविदिरे |
| (छिद्) | चिच्छेद | चिच्छिदतुः | चिच्छिदुः | (रुच्) | रुरुचे | रुरुचाते | रुरुचिरे |
| (मुच्) | मुमोच | मुमुचतुः | मुमुचुः | (मुच्) | मुमुचे | मुमुचाते | मुमुचिरे |
| (त्रुट्) | तुत्रोट | तुत्रुटतुः | तुत्रुटुः | (युध्) | युयुधे | युयुधाते | युयुधिरे |
| (मुह्) | मुमोह | मुमुहतुः | मुमुहुः | (वृत्) | ववृते | ववृताते | ववृतिरे |

| परस्मैपदीयाः प्रत्ययाः । | | | | आत्मनेपदीयाः प्रत्ययाः । | | |
|---|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | | ए० व० | द्वि० व० | ब० व० |
| अ | व | म | प्र० पु० | ए० | वहे | महे |
| थ | अथुस् | अ | द्वि० पु० | से | आथे | ध्वे |
| अ | अतुस् | उस् | तृ० पु० | ए | आते | इरे |

The underlined terminations in the above are strong ( पित् ) and the rest are weak. ( अपित् )

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (कृष्) | चकर्ष | चकृषतुः | चकृषुः | (कृप्) | चकृपे | चकृपाते | चकृपिरे |
| (नृत्) | ननर्त | ननृततुः | ननृतुः | (वृध्) | ववृधे | ववृधाते | ववृधिरे |
| (स्पृश्) | पस्पर्श | पस्पृशतुः | पस्पृशुः | (ग्रह्) | जगृहे | जगृहाते | जगृहिरे |
| (दृश्) | ददर्श | ददृशतुः | ददृशुः | (क्लृप्) | चक्लृपे | चक्लृपाते | चक्लृपिरे |

1. The final vowel and the उपान्त्य अ of roots take वृद्धि before the अ of the third person singular. The उपान्त्य short vowel takes its गुण substitute before अ.

2. Before a weak termination the final इ or ई is changed to य, only when it is preceded by a simple consonant and when the base consists of more than one syllable.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (प्री) | पिप्राय | पिप्रियतुः | पिप्रियुः | (प्री) | पिप्रिये | पिप्रियाते | पिप्रियिरे |
| (सु) | सुषाव | सुषुवतुः | सुषुवुः | (सु) | सुषुवे | सुषुवाते | सुषुविरे |
| (स्तु) | तुष्टाव | तुष्टुवतुः | तुष्टुवुः | (स्तु) | तुष्टुवे | तुष्टुवाते | तुष्टुविरे |
| (श्रु) | शुश्राव | शुश्रुवतुः | शुश्रुवुः | (श्रु) | शुश्रुवे | शुश्रुवाते | शुश्रुविरे |
| (श्वि) | शिश्वाय | शिश्वियतुः | शिश्वियुः | (स्मि) | सिष्मिये | सिष्मियाते | सिष्मियिरे |
| (श्वि)-(शु) | शुशाव | शुशुवतुः | शुशुवुः | | | | |
| (श्रि) | शिश्राय | शिश्रियतुः | शिश्रियुः | (श्रि) | शिश्रिये | शिश्रियाते | शिश्रियिरे |
| (धु) | दुधाव | दुधुवतुः | दुधुवुः | | | | |
| (ह्वे)-(हु) | जुहाव | जुहुवतुः | जुहुवुः | (ह्वे)-(हु) | जुहुवे | जुहुवाते | जुहुविरे |

The ending इ, ई or उ, ऊ are changed to इय् or उव् when followed by a weak termination beginning with a vowel.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (उख्) | उवोख | ऊखतुः | ऊखुः | (इष्) | इयेष | ईषतुः | ईषुः |
| (इ) | इयाय | ईयतुः | ईयुः | | | | |

1. The reduplicative इ is changed to इय् and उ to उव् when followed by a dissimilar vowel and when they do not, the two vowels combine and become ई or ऊ.

2. The reduplicative इ of इ ( to go ) is lengthened before weak terminations of the perfect and the reduplicated इ is then changed to य् before weak terminations beginning with a vowel.

उ + उख् + अ = उ + ओख्+अ= उव् + ओख् + अ = उवोख ।
इ + इ + अ = इ + ऐ + अ = इय् + आय् + अ = इयाय ।
इ + इ + अतुस् = ई + इ + अतुस् = ई + यतुस् = ईयतुः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (धा) | दधौ | दधतुः | दधुः | (धा) | दधे | दधाते | दधिरे |
| (दा) | ददौ | ददतुः | ददुः | (दा) | ददे | ददाते | ददिरे |
| (ज्ञा) | जज्ञौ | जज्ञतुः | जज्ञुः | (जन्)-(ज्ञा) | जज्ञे | जज्ञाते | जज्ञिरे |
| (पा) | पपौ | पपतुः | पपुः | | | | |
| (मा) | ममौ | ममतुः | ममुः | (अधि + इ)–(अधि + गा) | अधिजगे | अधिजगाते | अधिजगिरे |
| (हा) | जहौ | जहतुः | जहुः | (हा) | जहे | जहाते | जहिरे |
| (स्था) | तस्थौ | तस्थतुः | तस्थुः | (स्था) | तस्थे | तस्थाते | तस्थिरे |
| (ग्लै) | जग्लौ | जग्लतुः | जग्लुः | (प्यै) | पप्ये | पप्याते | पप्यिरे |
| (ध्यै) | दध्यौ | दध्यतुः | दध्युः | | | | |
| (ख्या) | चख्यौ | चख्यतुः | चख्युः | (ख्या) | चख्ये | चख्याते | चख्यिरे |
| (चक्ष्) | चक्षौ | चक्षतुः | चक्षुः | | चक्षे<br>चचक्षे | चक्षाते<br>चचक्षाते | चक्षिरे ।<br>चचक्षिरे । |

( या becomes उभयपदी in the perfect )

1. Roots ending in आ drop their final vowel before a termination beginning with a vowel.

2. The termination अ of the singulars in perfect is changed to औ when applied to roots ending in आ.

3. The final ए, ऐ and ओ of roots are replaced by आ in Perfect.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (स्तॄ) | तस्तार | तस्तरतुः | तस्तरुः | (स्तृ) | तस्तरे | तस्तराते | तस्तरिरे |
| (गॄ) | जगार | जगरतुः | जगरुः | (स्तॄ) | ,, | ,, | ,, |
| (स्मृ) | सस्मार | सस्मरतुः | सस्मरुः | (ऋ) | आर | आरतुः | आरुः |
| (स्वृ) | सस्वार | सस्वरतुः | सस्वरुः | (जागृ) | जजागार | जजागरतुः | जजागरुः |

1. Roots ending in long ॠ and the roots स्मृ, स्वृ, स्तृ, जागृ and ऋ first take गुण and then the reduplication.

| | | | |
|---|---|---|---|
| (पॄ) | पपार | पपरतुः–पप्रतुः | पपरुः-पप्रुः |
| (दॄ) | ददार | ददरतुः-दद्रतुः | ददरुः-दद्रुः |

1. Roots शॄ, दॄ and पॄ take गुण optionally before the weak terminations of the Perfect.

| | | | | |
|---|---|---|---|---|
| Exception—( भू )-(बभूव्) | | बभूव | बभूवतुः | बभूवुः |
| | ( गम् ) | जगाम | जग्मतुः | जग्मुः |
| | ( हन् ) | जघान | जघ्नतुः | जघ्नुः |
| | ( खन् ) | चखान | चख्नतुः | चख्नुः |
| | ( अद् ) | आद | आदतुः | आदुः |
| | ( अद् )-( घस् ) | जघास | जक्षतुः | जक्षुः |

1. The उपान्त्य अ of गम्, हन्, खन् and घस् is dropped before weak terminations of the Perfect.

2. ह becomes घ throughout and घस् after dropping अ becomes जक्ष्. घस् is optionally conjugated for अद्.

3. The roots अस् and ब्रू have no form in Perfect but भू and वच् are respectively conjugated instead.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (अर्द्) | आनर्द | आनर्दतुः | आनर्दुः | (ऋज्) | आनृजे | आनृजाते | आनृजिरे |
| (अन्त्) | आनन्त | आनन्ततुः | आनन्तुः | (ऋध्) | आनर्ध | आनर्धतुः | आनर्धुः |
| (अर्च्) | आनर्च | आनर्चतुः | आनर्चुः | (अश्) | आनशे | आनशाते | आनशिरे |
| (अर्ह्) | आनर्ह | आनर्हतुः | आनर्हुः | | | | |

1. If the reduplicative syllable consist of अ only the अ is lengthened.

2. Roots beginning with अ and ending with a double consonant and those with an initial ऋ and the root अश्, 5. A. insert न् after the reduplicative syllable.

(स्वञ्ज्) सस्वञ्जे सस्वञ्जाते सस्वञ्जिरे । सस्वजे सस्वजाते सस्वजिरे ।

1. स्वञ्ज् drops its nasal optionally in Perfect.

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (तन्) | ततान | तेनतुः | तेनुः | (तन्) | तेने | तेनाते | तेनिरे |
| (नद्) | ननाद | नेदतुः | नेदुः | (रभ्) | रेभे | रेभाते | रेभिरे |
| (मद्) | ममाद | मेदतुः | मेदुः | (मन्) | मेने | मेनाते | मेनिरे |
| (चर्) | चचार | चेरतुः | चेरुः | (यत्) | येते | येताते | येतिरे |
| (शम्) | शशाम | शेमतुः | शेमुः | (सह्) | सेहे | सेहाते | सेहिरे |

1. When a root has an अ between two simple consonants and the first consonant unchangeable in the reduplication, the अ is replaced by ए and the reduplicative syllable dropped before weak terminations.

(तॄ) ततार तेरतुः तेरुः (त्रप्) त्रेपे त्रेपाते त्रेपिरे
(फल्) पफाल फेलतुः फेलुः (राध्) रराध रेधतुः रेधुः
(भज्) बभाज भेजतुः भेजुः

These roots necessarily follow the above rule.

(जॄ) जजार जजरतुः } जजरुः } (भ्राज्) बभ्राजे } बभ्राजाते } बभ्राजिरे
जेरतुः } जेरुः } भ्रेजे } भ्रेजाते } भ्रेजिरे

(भ्रम्) बभ्राम बभ्रमतुः } बभ्रमुः } In the same way भ्राश्, भ्लाश्.
भ्रेमतुः } भ्रेमुः }

(राज्) रराज रराजतुः } रराजुः } (त्रस्) तत्रास तत्रसतुः } तत्रसुः
रेजतुः } रेजुः } त्रेसतुः } त्रेसुः

(स्वन्) सस्वान सस्वनतुः } सस्वनुः }
स्वेनतुः } स्वेनुः }

These roots follow the above rule optionally.

(वम्) ववाम ववमतुः ववमुः । (शस्) शशास शशसतुः शशसुः

1. Roots beginning with व् and the roots शश् and दद् do not undergo the changes mentioned above.

(वप्) उवाप ऊपतुः ऊपुः (वप्) ऊपे ऊपाते ऊपिरे
(वच्) उवाच ऊचतुः ऊचुः (वच्) ऊचे ऊचाते ऊचिरे

(वच् is उभयपदी in Perfect.)

(वस्) उवास ऊषतुः ऊषुः
(स्वप्) सुष्वाप सुषुपतुः सुषुपुः
(वह्) उवाह ऊहतुः ऊहुः (वह्) ऊहे ऊहाते ऊहिरे
(वद्) उवाद ऊदतुः ऊदुः (वद्) ऊदे ऊदाते ऊदिरे
(वश्) उवाश ऊशतुः ऊशुः
(वे) उवाय ऊवतुः-ऊयतुः ऊवुः-ऊयुः (वे) ऊये-ऊवे ऊयाते-ऊवाते ऊयिरे-ऊविरे
(वे) ववौ ववतुः ववुः (वे) ववे ववाते वविरे
(व्ये) विव्याय विव्यतुः विव्युः (व्ये) विव्ये विव्याते विव्यिरे
(व्यच्) विव्याच विविचतुः विविचुः
(व्यध्) विव्याध विविधतुः विविधुः

(यज्) इयाज ईजतुः ईजुः (यज्) ईजे ईजाते ईजिरे
(ग्रह्) जग्राह जगृहतुः जगृहुः (ग्रह्) जगृहे जगृहाते जगृहिरे

1. The above roots change their य्, व् and र् to इ, उ, and ऋ respectively. This change is called संप्रसारण.

2. Before strong terminations संप्रसारण takes place in the reduplicative syllable only.

3. The vowel following a संप्रसारण is dropped.

4. When two members of a conjunct consonant are capable of taking संप्रसारण the second one only takes it. *Cf.* व्यध् and व्यच्.

5. वे and श्वि are conjugated in the ordinary way i. e. without undergoing the संप्रसारण change.

| | | | |
|---|---|---|---|
| ( चुर् ) | चोरयाञ्चकार | चोरयाञ्चक्रतुः | चोरयाञ्चक्रुः |
| | चोरयामास | चोरयामासतुः | चोरयामासुः |
| | चोरयाम्बभूव | चोरयाम्बभूवतुः | चोरयाम्बभूवुः |
| | चोरयाञ्चक्रे | चोरयाञ्चक्राते | चोरयाञ्चक्रिरे |
| ( ऊह् ) | ऊहाञ्चकार-मास-म्बभूव | ऊहाञ्चक्रतुः—मासतुः—म्बभूवतुः- | ऊहाञ्चक्रुः—मासुः-म्बभूवुः |
| ( उञ्छ् ) | उञ्छाञ्चकार | उञ्छाञ्चक्रतुः | उञ्छाञ्चक्रुः |
| ( ईर्ष्य् ) | ईर्ष्याञ्चकार | ईर्ष्याञ्चक्रतुः | ईर्ष्याञ्चक्रुः |
| ( चकास् ) | चकासाञ्चकार | चकासाञ्चक्रतुः | चकासाञ्चक्रुः |
| ( दरिद्रा ) | दरिद्राञ्चकार | दरिद्राञ्चक्रतुः | दरिद्राञ्चक्रुः |
| also | ददरिद्रौ | ददरिद्रतुः | ददरिद्रुः |
| ( तुल ) | तोलयाञ्चकार | तोलयाञ्चक्रतुः | तोलयाञ्चक्रुः |

1. Roots beginning with a long vowel and roots having more than one syllable and those of the 10th conjugation, causal, desiderative and other derived roots take Periphrastic Perfect.

2. The Periphrastic Perfect is formed by adding आम् to the root and then appending the forms of the reduplicative perfect of कृ, भू or अस्.

3. आम् is a strong termination.

4. The अय् of the 10th conjugation is retained in the periphrastic perfect.

( दय् ) दयाञ्चक्रे दयाञ्चक्राते दयाञ्चक्रिरे

Similarly are conjugated अय्, आस् and कास् ( all Atm. ) which take the periphrastic perfect necessarily.

( उष् ) ओषाञ्चकार–उवोष

( विद् ) विदाञ्चकार–विवेद–( Here the उपान्त्य इ does not take गुण. )

( जागृ ) जागराञ्चकार–जजागार

1. ( These three roots take the periphrastic perfect optionally. )

( भी ) बिभयाञ्चकार–बिभाय। ( ह्री ) जिह्रयाञ्चकार–जिह्राय

( भृ ) बिभराञ्चकार–बभार। ( हु ) जुहवाञ्चकार–जुहाव

1. ( These four roots take the periphrastic perfect optionally and when they do, they undergo all the reduplicative changes. )

( कम् ) कामयाञ्चक्रे–चकमे

1. कम् takes the periphrastic perfect optionally and the उपान्त्य अ takes वृद्धि.

Exceptions—( रध् ) ररन्ध ररन्धतुः ररन्धुः

रध् becomes रन्ध् before a vowel in the Perfect.

( गुह् ) जुगूह जुगुहतुः जुगुहुः ( गुह् ) जुगुहे जुगुहाते जुगुहिरे

गुह् becomes गूह् before a strong termination beginning with a vowel.

( मृज् ) ममार्ज ममृजतुः-ममार्जतुः ममृजुः-ममार्जुः

मृज् becomes मार्ज् necessarily before strong terminations and optionally before weak terminations.

The passive of the perfect is formed by adding the आत्मनेपद terminations to the base whether the root is परस्मैपदी or आत्मनेपदी.

The Perfect shows that the action took place at a very remote time and that it was not witnessed by the speaker. In the first person it shows something done by the speaker of which he was unconscious or that it was performed without his right cognizance or which he wants to hide by affirming the opposite.

( प्रथमपुरुषे चित्तभ्रमादिना परोक्षता भवति। अत्यन्तापह्नवेऽपि लिट् भवति। )

---

# संख्याविशेषणानि

| संख्यावाचकानि | | क्रमवाचकानि (पु० न०) | (स्त्री०) |
|---|---|---|---|
| १ | एक | प्रथम, अग्रिम, आदिम | प्रथमा |
| २ | द्वि | द्वितीय | द्वितीया |
| ३ | त्रि | तृतीय | तृतीया |
| ४ | चतुर् | चतुर्थ-तुर्य-तुरीय | चतुर्थी-तुरीया |
| ५ | पञ्चन् | पञ्चम | पञ्चमी |
| ६ | षष् | षष्ठ | षष्ठी |
| ७ | सप्तन् | सप्तम | सप्तमी |
| ८ | अष्टन् | अष्टम | अष्टमी |
| ९ | नवन् | नवम | नवमी |
| १० | दशन् | दशम | दशमी |
| ११ | एकादशन् | एकादश | एकादशी |
| १२ | द्वादशन् | द्वादश | द्वादशी |
| १३ | त्रयोदशन् | त्रयोदश | त्रयोदशी |
| १४ | चतुर्दशन् | चतुर्दश | चतुर्दशी |
| १५ | पञ्चदशन् | पञ्चदश | पञ्चदशी |
| १६ | षोडशन् | षोडश | षोडशी |
| १७ | सप्तदशन् | सप्तदश | सप्तदशी |
| १८ | अष्टादशन् | अष्टादश | अष्टादशी |
| १९ | नवदशन् | नवदश | नवदशी |
| | एकोनविंशति | एकोनविंश-एकोनविंशतितम | ०शी-०तमी |
| | एकान्नविंशति | एकान्नविंश-एकान्नविंशतितम | ०शी-०तमी |
| | ऊनविंशति | ऊनविंश-ऊनविंशतितम | ,, — ,, |
| २० | विंशति | विंश-विंशतितम | ,, — ,, |

The cardinal numbers between विंशति and त्रिंशत्, त्रिंशत्, and चत्वारिंशत्, and so on are made up by prefixing एक, द्वि etc. upto नवन् to the lower. The ninth intermediate number is also made up by prefixing एकोन, ऊन or एकान्न to the higher. The numbers from 21 to 29 are given below:—

२१ एकविंशति, २२ द्वाविंशति, २३ त्रयोविंशति, २४ चतुर्विंशति, २५ पञ्चविंशति, २६ षड्विंशति, २७ सप्तविंशति, २८ अष्टाविंशति, २९ नवविंशति or एकोनत्रिंशत् or एकान्नत्रिंशत् or ऊनत्रिंशत्.

1. All Sandhi rules are observed in making these compounds.

2. The final न् is invariably dropped.

3. द्वि becomes द्वा, त्रि—त्रयः and अष्टन्—अष्टा everywhere except in the case of चत्वारिंशत्, पञ्चाशत्, षष्टि, सप्तति and नवति where these changes are optional e. g. द्वि or द्वाचत्वारिंशत्; त्रि or त्रयश्चत्वारिंशत्; अष्ट or अष्टाचत्वारिंशत्. In the case of अशीति no change is made e. g. द्व्यशीति, त्र्यशीति, अष्टाशीति only.

| संख्यावाचकानि । | | क्रमवाचकानि (पुं. न.) | (स्त्री.) |
|---|---|---|---|
| ३० | त्रिंशत् | त्रिंश-त्रिंशत्तम | त्रिंशी—त्रिंशत्तमी |
| ४० | चत्वारिंशत् | चत्वारिंश-चत्वारिंशत्तम | ०शी—०मी |
| ५० | पञ्चाशत् | पञ्चाश-पञ्चाशत्तम | ,, ,, |
| ६० | षष्टि | षष्टितम | षष्टितमी |
| ७० | सप्तति | सप्ततितम | सप्ततितमी |
| ८० | अशीति | अशीतितम | अशीतितमी |
| ९० | नवति | नवतितम | नवतितमी |
| १०० | शतम् | शततम | शततमी |

The ordinals of 60, 70, 80, and 90 are formed by adding तम only, but those of the intermediate numbers are optionally formed by dropping the final vowel and adding अ e. g. (६१) एकषष्टितमः or एकषष्टः

२०० द्विशतम्, ३०० त्रिशतम्, १००० सहस्रम्, १०,००० अयुतम्, १००,००० लक्षम् (*fem.* लक्षा).

एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।
अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्
जलधिश्चान्तं मध्यं परार्धमिति दशगुणोत्तराः सञ्ज्ञाः ।
संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैः ।

११२ द्वादशाधिकं शतं or द्वादशाधिकशतम् ।
१८९२ द्वि or द्वानवत्यधिकाष्टशताधिकसहस्रम् ।
१७७६३९ एकोनचत्वारिंशदधिकषट्शताधिकसप्तसप्ततिसहस्राधिकं लक्षम् ।
७५४ चतुःपञ्चाशदुत्तरं सप्तशतम् ।

1. The cardinal numbers are expressed by means of अधिक or उत्तर added to the number showing the excess; the अधिक or उत्तर may be repeated with every multiple of ten or hundred.

2. विंशति and other cardinal numbers upto नवनवति are all feminine substantives and are declined as such. Numbers शत, सहस्र and others are neuter with the exception of लक्ष ( *mas.* & *fem.* ) कोटि ( *fem.* ) and शङ्कु and जलधि ( *mas.* ) All these are declined in singulars and may be used with plural nouns; e. g. पञ्चविंशतिर्ब्राह्मणाः । एकादशोत्तरेण शतेन नरैः or स्त्रीभिः; but they may be made to have duals and plurals when used as fixed standards of counting e.g. ब्राह्मणानां विंशतयः many twenties of Brahmanas; द्वे शते नारीणाम् ।

1. The declension of cardinals from एक to नवन् is given on page 143 of द्वितीया अभिनवा पाठावलिः ।

2. Upto नवदशन् the cardinals are adjectives; i. e they take the number and the case of the nouns to which they are applied.

3. प्रथम, द्वितीय, तृतीय are optionally declined like pronouns. All other ordinals are regular in declension.

## संख्यावाचकानि क्रियाविशेषणानि ।

Once सकृत् ।
Twice द्विः ।
Thrice त्रिः ।
Four times चतुः ।
Five times पञ्चकृत्वः ।

Seven times सप्तकृत्वः ।
Fifty times पञ्चाशत्कृत्वः ।

कृत्वस् is added to cardinals from पञ्चन् onwards to show frequency.

In one way एकधा ।
In two ways द्विधा—द्वेधा—द्वैधम् ।
In three ways त्रिधा—त्रेधा—त्रैधम् ।
In four ways चतुर्धा ।
In five ways पञ्चधा ।
In six ways षोढा—षड्धा ।
धा is added to cardinals to show the frequency of manner.
Singly—one by one एकशः ।
Two by two द्विशः ।
Collection of four चतुष्टय ।
Colleclion of five पञ्चतय or पञ्चत् ।
Twofold द्वय-द्वितय ।
Threefold त्रय-त्रितय ।
Collection of ten दशत् ।

The affix तय is added to numerals showing collection, as also क and अत् e. g. षट्क, पञ्चत्, दशत् ।

---

## तरतमवाचकानि विशेषणानि ।

| | | | | | |
|---|---|---|---|---|---|
| गुरु — | Comparative | गुरुतर — | Superlative | गुरुतम |
| महत् — | ,, | महत्तर — | ,, | महत्तम |
| शुचि — | ,, | शुचितर — | ,, | शुचितम |
| प्रिय — | ,, | प्रियतर — | ,, | प्रियतम |

The Comparative and Superlative degrees of adjectives are formed by the addition to their masculine base the suffix तर ( तरा *fem.* ) and तम ( तमा *fem.* )

| | | | | | |
|---|---|---|---|---|---|
| विश्वजित्— | Comparative | विश्वजित्तर | — | Superlative | विश्वजित्तम |
| सत्यवाच्— | ,, | सत्यवाक्तर | — | ,, | सत्यवाक्तम |
| धनिन् — | ,, | धनितर | — | ,, | धनितम |
| उदर्चिस्— | ,, | उदर्चिष्टर | — | ,, | उदर्चिष्टम |

Adjectives change their final consonants before तर and तम as they change it before the neuter singular termination.

| | | | | | |
|---|---|---|---|---|---|
| धीमत् — | Comparative | धीमत्तर | — | Superlative | धीमत्तम |
| विद्वस् — | ,, | विद्वत्तर | — | ,, | विद्वत्तम |

These adjectives undergo all the changes before तर and तम as they would before the locative plural termination सु.

| | | | | | |
|---|---|---|---|---|---|
| पचति — | Comparative | पचतितराम् | — | Superlative | पचतितमाम् |
| उच्चैः — | ,, | उच्चैस्तराम् | — | ,, | उच्चैस्तमाम् |
| सु — | ,, | सुतराम् | — | ,, | सुतमाम् |
| जल्पति — | ,, | जल्पतितराम् | — | ,, | जल्पतितमाम् |

The suffixes तराम् and तमाम् are added to verbs and to indeclinables which remain indeclinables with तराम् and तमाम् added to them but if an indeclinable is changed into an adjective after the addition of the Comparative and Superlative suffixes then they are तर and तम e. g. उच्चैस्तमः तरुः ।

| | | | | | |
|---|---|---|---|---|---|
| अल्प — | Comparative | अल्पीयस् | — | Superlative | अल्पिष्ठ |
| लघु — | ,, | लघीयस् | — | ,, | लघिष्ठ |
| महत् — | ,, | महीयस् | — | ,, | महिष्ठ |
| मृदु — | ,, | म्रदीयस् | — | ,, | म्रदिष्ठ |
| क्षिप्र — | ,, | क्षेपीयस् | — | ,, | क्षेपिष्ठ |
| स्थिर — | ,, | स्थेयस् | — | ,, | स्थेष्ठ |
| ऊरु — | ,, | वरीयस् | — | ,, | वरिष्ठ |

1. Qualitative adjectives take the suffixes ईयस् ( ईयसी *fem.* ) and इष्ठ ( इष्ठा *fem.* ) to show Comparative and Superlative degrees optionally.

2. Before ईयस् and इष्ठ (*a*) The final vowel is dropped.

(*b*) The final consonant is dropped.

(*c*) An adjective beginning with a consonant and having ऋ in it, changes the ऋ to र् e. g. मृदु-म्रदीयस्; but ऋजु—ऋजीयस्—ऋजिष्ठ.

| | | | | | |
|---|---|---|---|---|---|
| बलिन् — | Comparative | बलीयस् — | Superlative | बलिष्ठ |
| मतिमत् — | ,, | मतीयस् — | ,, | मतिष्ठ |
| मेधाविन्— | ,, | मेधीयस् — | ,, | मेधिष्ठ |
| वसुमत् — | ,, | वसीयस् — | ,, | वसिष्ठ |

When ईयस् and इष्ठ are added to adjectives formed from nouns the suffixes मत्, वत्, इन्, विन् are dropped and the remainder of the base drops its final vowel.

| | | | | | |
|---|---|---|---|---|---|
| पापीयस् — | comparative | पापीयस्तर — | superlative | पापीयस्तम |
| श्रेष्ठ — | ,, | श्रेष्ठतर — | ,, | श्रेष्ठतम |

तर and तम are sometimes added to Comparatives and Superlatives in ईयस् and इष्ठ.

There are many irregular forms of Comparative and Superlative degrees. Some of them are noted below:—

| | | | |
|---|---|---|---|
| अन्तिक | Near | नेदीयस् | नेदिष्ठ |
| अल्प | Small | अल्पीयस् | अल्पिष्ठ |
| | | कनीयस् | कनिष्ठ |
| क्षुद्र | Mean | क्षोदीयस् | क्षोदिष्ठ |
| गुरु | Heavy | गरीयस् | गरिष्ठ |
| दीर्घ | Long | द्राघीयस् | द्राघीष्ठ |
| दूर | Far | दवीयस् | दविष्ठ |
| प्रशस्य | Praiseworthy | श्रेयस् | श्रेष्ठ |
| | | ज्यायस् | ज्येष्ठ |
| प्रिय | Dear | प्रेयस् | प्रेष्ठ |
| बहु | Much | भूयस् | भूयिष्ठ |
| बहुल | Manifold | बंहीयस् | बंहिष्ठ |

| | | | |
|---|---|---|---|
| युवन् | Young | यवीयस् | यविष्ठ |
| | | कनियस् | कनिष्ठ |
| बाढ | Firm | साधीयस् | साधिष्ठ |
| वृद्ध | Old | वर्षीयस् | वर्षिष्ठ |
| | | ज्यायस् | ज्येष्ठ |
| वृन्दारक | Great | वृन्दीयस् | वृन्दिष्ठ |
| स्थूल | Great | स्थवीयस् | स्थविष्ठ |
| स्फिर | Large | स्फेयस् | स्फेष्ठ |
| ह्रस्व | Short | ह्रसीयस् | ह्रसिष्ठ |

---

## नामधातुः ( Denominatives )

| | | |
|---|---|---|
| पुत्रीयति | स्वामीयति | यशस्काम्यति |
| मालीयति | दात्रीयति | प्रासादीयति |
| राजीयति | पुत्रकाम्यति | समिध्यति |

1. The above forms are derived from nominal bases such as पुत्र, माला, राजन्, स्वामिन्, समिध् with the addition of the suffix य ( क्यच् ) or काम्य.

2. Before this य (क्यच्) (*a*) The final अ or आ is changed to ई.

(*b*) The final इ or उ is lengthened.

(*c*) The final ऋ is changed to री.

(*d*) The final ओ or औ is changed to अव् and आव् respectively. *Cf.* गो—गव्य; नौ—नाव्य.

(*e*) The final nasal is dropped and the preceding vowel is changed as shown in the above rules.

(*f*) The other final consonants remain unchanged.

3. These verbs derived from nouns show that a person wishes for that, or treats a person or thing like that which is

expressed by the nouns, e.g. पुत्रीयति or पुत्रकाम्यति—आत्मनः पुत्रमिच्छति, or पुत्रमिवाचरति; प्रासादीयति—प्रासादे इवाचरति etc.

4. All these verbs take the परस्मैपदी terminations and should be considered as verbs of the first conjugation.

| | | |
|---|---|---|
| कृष्णायते | जलायते | ओजायते |
| अप्सरायते | सपत्नायते सपतीयते, सपत्नीयते, | युवायते |
| कुमारायते | अग्नीयते | कालिदासायते |

5. These forms are derived by adding य (क्यङ्) to nominal bases and by conjugating them in the Atmanaipada.

6. These verbs show that the person or the thing is behaving like that which is expressed by the nominal base. *Cf.* कृष्णायते—कृष्ण इवाचरति ।

7. Before this य (क्यङ्) (*a*) The final अ is lengthened.

(*b*) आ remains unchanged.

(*c*) The other final letters undergo the changes given under (क्यच्) य rules.

(*d*) If this य is added to a feminine base the corresponding masculine base is substituted for the feminine one e.g. कुमारायते—कुमारी इव आचरति ।

| | | |
|---|---|---|
| बाष्पायते | शब्दायते | कलहायते |
| दुःखायते | वैरायते | सुखायते |

8. Here the verbs show a different meaning e.g. बाष्पायते—He sheds tears; शब्दायते—He makes a sound; दुःखायते—He suffers pain, etc.

| | | |
|---|---|---|
| पण्डितायते | मन्दायते | भृशायते |
| शीघ्रायते | जन्मायते | चपलायते |

9. Here the verbs show that the person or the thing wants to become like that which is expressed by the nominal base e. g. पण्डितायते—न पण्डितः अपण्डितः, अपण्डितः पण्डितः इव भवति इति पण्डितायते।

आविलयति द्रढयति
लघयति मिश्रयति

10. Here the verbs show that the person or the thing does that which is expressed by the nominal base e. g. आविल्यति—आविलं करोति।

11. Here the suffix is इ ( णिच् ) and the roots are conjugated like the roots of the 10th conjugation.

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते।
व्यालो माल्यगुणायते विपरसः पीयूपवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ १ ॥
तिष्ठन्ति सधनद्वारे गुणिनः किङ्करा इव।
दोपा अपि गुणायन्ते दोपायन्ते गुणा अपि ॥ २ ॥

---

### Sanskrit Prosody.

Sanskrit literature may be divided in two groups, namely, गद्य and पद्य. The पद्य is a combination of four padâs which are regulated by the number of syllables ( अक्षर ) or by the number of syllabic instants.




अक्षर is as much of a word as can be pronounced at one, that is a vowel with or without one or more consonants.

1. An अक्षर is लघु or गुरु according as the vowel is short or long. The vowels अ, इ, उ, ऋ, ऌ are short and आ, ई, ऊ, ॠ, ॡ, and ए, ऐ, ओ, औ are long. But a short vowel becomes long in prosody when it is followed by an Anusvára or visarga, or by a conjunct consonant e. g. गन्ध where ग is long.

सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् ।
वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा ॥

2. In जाति the metre is regulated by syllabic instants. One instant ( मात्रा ) is allotted to a short vowel and two to a long one.

3. A वृत्त is known from the Gaṇās it contains. The Gaṇās are eight य र त भ ज स म न. Each Gaṇa consists of three syllables. The above Gaṇās can be expressed in symbols like ⏑ ( लघु ), – ( गुरु ).

| | | |
|---|---|---|
| य ⏑ – – | भ – ⏑ ⏑ | म – – – |
| र – ⏑ – | ज ⏑ – ⏑ | न ⏑ ⏑ ⏑ |
| त – – ⏑ | स ⏑ ⏑ – | |

Similarly ल is used to denote a short syllable and ग a long one. The verse given below describes the Gaṇās very well.

आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरु लाघवम् ।

Or the line यमाताराजभानसलगम् gives the short and long syllables, if the two following syllables are taken to represent the Gaṇa, the first letter of which is the name of it e. g. यमाता–यगण, मातारा–मगण, ताराज–तगण, राजभा–रगण and so on. The definitions of different वृत्तs are given in the exercises at the end of poetry lessons.

---

New Sanskrit Readers : Book III
By V. P. Bokil, M.A., S.T.C.D., & L. R. Raddi, M.A., B.T.
1937. Price : One Rupee